...स्यागस्त्यायतेनामविघ्न





# अथ अमृतलहरी सटीका प्रारभ्यते



ॐश्रीगणेशायनमः ॥ ॥ नमस्तस्मैगणेशायब्रह्मविद्याप्रदायिने ॥ यस्यागस्त्यायतेनामविघ्न
सागरशोषणे ॥ १ ॥ श्रीगुरुंपरमात्मानंनत्वासाधूंश्चतत्परान् ॥ स्वकृतामृतलहरींविवृणोमिस
तांमुदे ॥ २ ॥ ॥ अथ सर्वतीर्थमयीगंगासर्वदेवमयोहरिरितिस्मृत्याहरेःपरमात्मनःस्तवनात्स
र्वेदेवाःस्तुताभवन्ति श्रीगंगास्नानेसर्वतीर्थस्नानमिवेतिसंसारभयनिवृत्यर्थंतस्यस्तवनंकर्तव्यमि
त्याह परात्मेति इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥
महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिश्रुतेः ॥ इंद्रिया

ॐश्रीगणेशायनमः ॥ ॥ परात्मैकोदेवोनचजगतिदेवोऽस्ति-
चपरस्ततस्तस्यस्तुत्यास्तवनमपिसर्वस्यभवति ॥ अतस्त-
स्येदानींस्तुतिरनुपमाकर्तुमुचिताविनातस्यस्तुत्यानहिभय-
निवृत्तिःप्रभवति ॥ १ ॥

णिपराण्याहुरिंद्रियेभ्यःपरंमनः ॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसइतिस्मृतेश्चेंद्रियादिभ्यः पर
उत्कृष्टःसएवात्माव्यापकः ॥ यदाप्नोतियदादत्तेयच्चात्तिविषयानिह यच्चास्यसंततोभावस्तस्मादा
त्मेतिगीयतेइतिस्मृतेः एकोऽद्वितीयः एकमेवाद्वितीयमितिश्रुतेः देवोद्योतनात्मकः सर्वसंघातप्र
काशकइत्यर्थः तदुक्तं आत्मचैतन्यमाश्रित्यदेहेंद्रियमनोधियः॥स्वकीयार्थेषुवर्ततेसूर्यालोकंयथाज
नाइति ॥ ननुदेवास्तुसूर्येन्द्रादयोऽन्येपिसंतितत्कथमुच्यतेपरात्मैकोदेवइतितत्राह ॥ नचेति ॥

परोद्वितीयःसूर्येन्द्रादिदेवोजगतिनास्तितस्यतद्विभूतित्वादित्यर्थः ततःसर्वदेवमयत्वात्परमात्मनस्तस्यस्तुत्यासर्वस्यसूर्येन्द्रादिदेवस्यापिस्तवनंभवतीत्यतस्तस्येदानींमनुष्यदेहप्राप्तिसमयेऽनुपमास्तुतिःकर्तुमुचितायोग्याहियस्मात्तस्यस्तुत्याविनाभयस्यजन्ममरणदुःखभीतेर्निवृत्तिर्नप्रभवति अनादिनिधनंविष्णुंसर्वलोकमहेश्वरं ॥ लोकाध्यक्षंस्तुवन्नित्यंसर्वदुःखातिगोभवेदितिस्मृतेः॥ ॥ १ ॥ इदानींभगवत्स्तुतितद्विज्ञप्ती अवतारयितुंगुरुशिष्यसंवादमाह ॥ कदाचिदितित्रिभिः॥

कदाचित्कश्चिन्नाजनिमृतिभयंवीक्ष्यविमनाभयंहर्त्राशुश्रीगुरु
चरणकंजंहिगतवान् ॥ ततःप्राहश्रीमज्जनिमरणसंसारजलधेः
कथंपारंप्राप्स्येप्रवदकृपयामत्कृतइति ॥ २ ॥ त्वमादौयज्ञा-
र्थंश्रुतिविहितकर्माणिकुरुभोस्ततःशुद्धस्वान्तोह्यधिगतविवे-
कादिनिवहः ॥

कस्मिंश्चित्समयेजनिमृतिभयंवीक्ष्यदृष्ट्वाविमनाउद्विग्नमनाः कश्चिन्नाशुभोदयःपुरुषोहिप्रसिद्धमाशुझटितिभयंहन्तृसंसारभयहरणशीलंश्रीगुरोश्चरणकंजंपादाब्जंगतवान्प्राप्नोतिस्म ॥ ततश्चरणारविन्दप्राप्तेरनन्तरंप्राहप्रोवाच हेश्रीमन्गुरोजनिमरणमेवसंसारःसएवजलधिःसमुद्रस्तस्मादहंकथं 
केनोपायेनपारंप्राप्स्येगमिष्यामीतिमत्कृतेमदर्थंकृपयात्वंप्रवदप्रकर्षेणब्रूहीति ॥ २ ॥ एवंप्रार्थितोगुरुःशिष्यमुवाच ॥ त्वमिति ॥ भोःशिष्यादौप्रथमतोयज्ञार्थंविष्णुप्रीत्यर्थं यज्ञोवैविष्णुरितिश्रुतेः

श्रुत्यावेदेनविहितानियानिनित्यादिकर्माणितानिकुरु ॥ ततस्तदनन्तरंशुद्धंस्वान्तमन्तःकरणं यस्यातएवाधिगतोविवेकादिस्तत्वज्ञानसाधननिवहोयेनतादृशःसन्स्वजनहितसक्तं स्वस्यजनाः स्वजनाःस्वभक्तास्तेषांहितमभीष्टन्तत्रसक्तंप्रभुवरंनारायणंत्वंज्ञानार्थमुपास्स्वतस्मिंश्चित्तस्थैर्यंकुरु ष्वेत्यर्थः वेतिपक्षान्तरेअथवाऽश्रुनेत्रजलंपुलकंरोमांचस्ताभ्यांसहवर्त्तमानःसाश्रुपुलकःसन्भगवतःषड्विधैश्वर्य्यसंपन्नस्येश्वरस्यस्तुतिम्गुणकथनरूपांविज्ञप्तिंवातदग्रेप्रार्थनारूपांत्वंकुर्विंतियोजना

उपास्स्व ज्ञानार्थं स्वजनहितसक्तं प्रभुवरंस्तुतिम्विज्ञप्तिम्वा-
कुरुभगवतःसाश्रुपुलकः ॥ ३ ॥ शिवस्याद्वैतस्याच्युतमहिम-
विष्णोः कृतविदः स्तुतिं विज्ञप्तिं वा कथय विरचेयं कथमि-
ति ॥ स्वशिष्यं विज्ञप्तो गुरुरवददाद्यस्य तदुभे अतस्ते कुर्व-
न्नाभवजलधिपारं सुखमियात् ॥ ४ ॥

॥३॥एवंभगवत्स्तुतिविज्ञप्त्योःप्रेरितेनशिष्येणतेकथंकुर्यामितिविज्ञप्तोगुरुस्तेकृत्वाबोधयितुंतत्फलमकीर्तयदित्याह ॥ शिवस्येति ॥ शिवमद्वैतंचतुर्थंमन्यन्तइतिश्रुत्युक्तस्यपरमात्मनःस्तुतिंविज्ञप्तिंवा कथंविरचेयंकुर्यामितिसंबंधः ॥ कथंभूतस्यशिवस्याद्वैतस्यकल्पितस्यतदतिरिक्तसत्ताभावात् ॥ ननुपरिछिन्नत्वेनतस्यापिकदाचित्सत्ताच्युतास्यादितितत्राह ॥ अच्युतमहिमविष्णोः ॥ नच्युतोमहिमासत्तायस्यतस्यभूम्नइत्यर्थः कृतविदःकृतानिजीवानांशुभाशुभकर्माणिमायावृत्त्यासएववे

 त्तिनत्वन्यस्तस्येत्यर्थः ॥ इत्येवंस्वशिष्येणविज्ञप्तःप्रार्थितोगुरुराद्यस्यकल्पिताधिष्ठानपरमात्मनस्त 
द्रुभेपूर्वोक्तेस्तुतिविज्ञप्तीस्वशिष्यंस्वशिष्यायावदद्रुक्तवान् ब्रूञ्समानार्थकत्वाद्द्विकर्मकोयंवदधा
 तुः यतोब्रह्मविद्गुरुर्भवाब्धेस्तरणार्थंभगवतःस्तुतिविज्ञप्तीउपदिदेशातस्तेकुर्वन्नापुरुषोभवजलधेःसं
सारसागरस्यपारंसुखमनायासेनेयात्प्राप्नुयादित्यर्थः ॥ ४ ॥ भगवतःस्तुतिविज्ञप्तीकथंविरचेयमि
तिस्वशिष्यप्रार्थितोगुरुस्तेकृत्वाबोधयति ॥ अयमित्यादिकिञ्चिन्न्यूनशतकेन ॥ हेस्वामिन्प्रभोऽ
यंमादृशोजीवःप्राणीमूढोमोहग्रसितोऽतःस्वंस्वकीयंहितंसुखसाधनंनचरतिनानुतिष्ठतिशिशुरिव

अयं मूढो जीवः शिशुरिव हितं स्वं न चरति दयार्द्रस्त्वं तातः
किमुतदपराधान्नु गणयेः ॥ कृतं तस्य स्वामिन्स्मरसि यदि वा-
र्योऽसतिमतिर्न चाज्ञां ते हित्वातृणमपि विधात्रादि चलति ॥५॥

स्तनंधयोयथापित्रादीनांपादतलप्रहाराद्यनुचिताचरणंचरति दयालवस्तेतस्यतन्नगणयंतितद्वत्
शरणंसुहृदित्युक्तेःपिताहमस्यजगतइत्युक्तेश्चदययार्द्रःस्निग्धस्तातःपितात्वंकिमुकस्मान्नुवितर्के
तस्यजीवस्यापराधानतुचिताचरणानिगणयेः शिशोः पित्रादिवत्त्वयानगणनीयाइत्यर्थः भोःस्वा
मिन्यदितस्यजीवस्यकृतंकर्मस्मरसितर्ह्यसति असत्कर्मणितस्यमतिर्वार्यानिवारणीयानतुतस्यम 
तिवारणेममसामर्थ्यंनास्तीतिनप्रभुत्वादित्याह ॥ तेतवांतर्यामिणआज्ञांहित्वात्यक्त्वाविधात्राद्या
तृणंसर्वंनचचलतिनचेष्टतइत्यर्थः ॥ यःसर्वेषुभूतेषुतिष्ठन्सर्वेभ्योभूतेभ्योंतरोयंसर्वाणिभूतानिनवि

दुर्यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यंतरोयमयत्येषतआत्मान्तर्याम्यमृतइत्या दिश्रुतेः ॥
॥ ५ ॥ असतीमतिर्वार्येत्युक्तंतामसन्मातिंदर्शयंस्तन्मतिमतामसंगपूर्वंकमीश्वरपदप्राप्तिंप्रार्थयति
॥ त्वमेकइति ॥ हेविभोभूमन्वस्तुतस्त्वमेकोऽद्वितीयः शुद्धोऽविद्यातत्कार्यमलरहितोसितथापि
येमूढानिगमबाह्यावैदिकदृष्टिशून्याअतोभ्रमपरवशादेहादिष्वात्मदृष्टयस्ततःपापनिरतास्तेत्वयि
शुद्धेमलमयमशुद्धंप्रपंचंपश्यंति शुक्तौरजतमिवारोपयंतीत्यर्थः तेपश्यंतिचेत्तर्हिपश्यंतुते नतव

त्वमेकः शुद्धोऽसि त्वयि निगमबाह्या मलमयं प्रपंचं पश्यंति
भ्रमपरवशाः पापनिरताः ॥ बहिस्तेभ्यः कृत्वा स्वपदशरणं
मां नय विभो गजेन्द्रे दृष्टं ते शरणद वदान्यत्वमुचितम् ॥ ६ ॥

किंहीयतइतितत्राह ॥ बहिरिति ॥ तेभ्योमूढेभ्योमांबहिष्कृत्वास्वस्यपदंचरणंस्थानंस्वरूपंवातदेव
शरणमाश्रयस्तत्रनयप्रापय नयतेर्द्विकर्मत्वाच्छरणमित्यधिकरणस्यकर्मसंज्ञातर्हितेभ्योबहिष्कृत्य
स्वपददानप्रकृतिर्मेनास्तीतितत्राह ॥ गजेंद्रइति ॥ संसारसागरेनिमज्ज्यमानानांस्वपदंशरणंद
दातीतितत्संबोधनंहेशरणदतेतवोचितंस्वपददानयोग्यंवदान्यत्वमौदार्य्यंगजेन्द्रेदृष्टंयथाग्राहेणा
तिपीडितायगजेन्द्रायस्वपदशरणमदास्तथाकालरूपेणग्राहेणातिपीडितंमामपिस्वपदशरणंनयेति
भावः ॥ ६ ॥

 ननुत्वादृशेभ्यःस्वपददानेममलीलासृष्टेर्हानिर्भविष्यतीतिचेत्तत्राह ॥ नसृष्टेरिति ॥ तवलीलासृ 
ष्टेर्हानिर्नभविष्यतियदिकृपयाइतःसृष्टेः सकाशान्मामवसिरक्षसि त्वयानेकेस्वभक्तारक्षितास्तथा
॥ ३ ॥ पितेसृष्टेर्हानिर्नजातेदानींममरक्षणेसाकथंभवेदितिभावः ॥ मयानेकेगुप्ताइत्यत्रकिंप्रमाणमितित
त्राह व्यसनमिति इत्येवंप्रकारकंस्वभक्तानांज्ञानिनांसृष्टेःसकाशात्पालनलक्षणंतेऽव्यसनंतत्परत्वं
श्रुतिपथेवेदलक्षणेकल्याणमार्गेऽस्तिप्रसिद्धमित्यर्थःब्रह्मविद्ब्रह्मैवभवति ज्ञानवान्मांप्रपद्यतइत्यादि

नसृष्टेस्ते हानिर्यदि हि कृपयेतोऽवसि च मां त्वयाऽनेके गुप्ता
व्यसनमिति तेऽस्ति श्रुतिपथे ॥ अतो मामुद्धर्तुं घटय मयि
दृष्टिं सुविमलां न रिक्तां मे यांचां स्वजनरत कुर्याः करुण-
या ॥ ७ ॥ मनश्चांचल्यं मे प्रतिदिनमवैषि त्वमनिशंततो
जातंदुःखंत्रिविधमपिसंसारानियतं ॥

श्रुतिस्मृतिप्रमाणात् ॥ यतोममरक्षणेतेसृष्टेर्हानिर्नास्त्यतोस्यामामुद्धर्तुंमयिसुविमलांदृष्टिंभक्ते
ष्विवपरप्रेमलक्षणांतत्त्वज्ञानिष्विवमहावाक्यजन्याभेदज्ञानलक्षणांवाविघटयसंपादययेनजन्ममर
णलक्षणसृष्टेस्तेममरक्षणंभवेदितिभावः ॥ हेस्वजनरतकरुणयेमांमेयांचांप्रार्थनांरिक्तांनिरर्थिकामर ॥ ३ ॥
ण्यरोदनमिवव्यर्थांत्वंनकुर्याः एतादृशपदार्थदानेऽन्यसामर्थ्याभावादितिभावः ॥ ७ ॥ किंचभ
वतःकृपालुत्वादपिममदुःखंतत्साधनंचनिवारणीयमित्याह ॥ मनश्चांचल्यमिति ॥ हेविभोममम

नसश्चांचल्यंचपलत्वंप्रतिदिनंतत्राप्यनिशंनिरंतरंत्वमवैषिजानासि ततोमनश्चांचल्याद्यज्जातमा ध्यात्मिकाधिभौतिकाधिदैविकरूपेणत्रिविधंदुःखंसंसारसत्वेदुःखंसंसाराभावेदुःखाभावइत्यन्वयव्य तिरेकाभ्यांसंसारनियतंतदपित्वंप्रतिदिनमनिशमवैषिसर्वेषांहृदिवर्तमानत्वात् तदुक्तंभगवता ईश्व रःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठतीति ॥ नन्वहंतवमनश्चांचल्यंतत्प्रयुक्तंदुःखंचजानामीतिकिंकुर्या मितितत्राह ॥ दयाब्धिरिति ॥ श्रुतिश्चवेदस्तदनुसारिणोजनसमूहाश्चतेषुसुतरांनिरंतरंदयाब्धि र्विख्यातःप्रसिद्धस्तत्तस्मात्दयाब्धित्वेसतिदुःखतत्कारणज्ञानवत्वात् ग्राहग्रस्तस्यकरिणोगजेंद्रस्ये

दयाब्धिर्विख्यातः श्रुतिजनसमूहेषु सुतरां नहन्यास्तत्कस्मा-
त्करिण इव दुःखं मम विभो ॥८॥ ध्रुवो दुःखोद्विग्नः शरणमगम-
त्त्वां सुखकरं तथा प्रह्लादोऽपि द्रुपदतनया चातिविकला ॥

वकालग्राहग्रस्तस्यममदुःखंसकारणंकस्मात्त्वंनहन्यान्ननाशयेःकमन्यंशरणंव्रजेयमितिभावः ॥८॥ यतस्त्वंशरणागतायसुखदोऽस्यतोऽपिमेदुःखंनिवार्य्यसुखंदेहीत्यभिप्रायेणप्रार्थयति ॥ ध्रुवइति ॥ हेस्वजनरतध्रुवऔत्तानपादिरुद्विग्नःस्वमातृसपत्नीवाक्यबाणैःपीडितस्तद्दुःखनिवृत्यैसुखकरंत्वां शरणमाश्रयमगमद्प्रापद्यथा ध्रुवस्तथापित्रापीडितःप्रह्लादोऽपित्वांशरणमगमत् द्रुपदतनयाद्रौप दीचातिविकलावनेदुर्वाससआगमनसमयेदुर्योधनसभायांचान्यशरणशून्यत्वेनातिदुःखितात्वां शरणमगमत् गजेंद्रश्चग्राहेणपीडितस्त्वांशरणमगमत् अन्येचबिभीषणसुग्रीवादयस्त्वांशरणमगमं

स्तेभ्यःसर्वेभ्यस्त्वंसुखमदास्तेषांदुःखंदूरीकृत्यातिसुखंदत्तवान् ॥ तथातेनैवप्रकारेणसंसृतिभयाच्छर
णागतायमह्यंचेद्यदिसुखंनंदद्यास्तदेदंतेषांदुःखनिवृत्तिपूर्वकसुखदानाख्यानंस्तुतिपरमनुगणयेतव
॥ ४ ॥ स्तुतिपरंतदाख्यानं नतुत्वयाकस्मैचिदपिसुखंदत्तमितिजानीयामित्यर्थः ॥ यद्वातथामह्यंनोचे
त्सुखंदास्यसितदेदंतवाख्यानंतुइतिवितर्केस्तुतिपरमहंगणयेऽपितुनैवगणयेयम्ममयिकिंचित्प्रति
बंधकत्वेनेदानींतेसुखजनकत्वंमास्तुतवतुस्वशरणागतसुखप्रदातृत्वमवश्यमेवेतिभावः ॥ ९ ॥

गजेंद्रश्चान्येवै स्वजनरत तेभ्यः सुखमदास्तथा मह्यंनोचेत्स्तु-
तिपरमिदंतेऽनुगणये ॥ ९ ॥ यदुक्तं ते नाम्नो विबुधसरितो मं-
गलजनेर्महत्वं गीताया भवदरणसंगस्य मुनिभिः ॥ तथाभूतं
तच्चेज्जनिमृतिभयं मे न किमपि प्रशंसावादश्चेन्निरयकथनं
स्यादपि मृषा ॥ १० ॥

शास्त्रेतवनामादीनांभूतार्थवादःप्रशंसावादोवोभयथाऽपिममजनिमृतिभयंनास्तीत्याह ॥ यदुक्त
मिति ॥ सकृदुच्चरितंयेनहरिरित्यक्षरद्वयं ॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रति ॥ महादेवमहा
देवमहादेवेतियोवदेत् ॥ एकेनैवभवेन्मुक्तिर्द्वाभ्यांदेवोभवेद्दणीत्यादिशास्त्रेणमुनिभिर्यत्तेनाम्नोमह ॥ ४ ॥
त्त्वमुक्तं तथामंगलाकल्याणजनिकाजनिःप्रादुर्भावोयस्याविबुधसरितःश्रीगंगायास्तस्यामहत्त्वं
गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छतीत्यादिशास्त्रेणमु

निभिर्यदुक्तं तथागीतायामहत्त्वं गीतापाठसमासक्तोमहापापयुतोपिवा॥ वैकुंठंसमवाप्नोतिविष्णु
नासहमोदतइत्यादिशास्त्रेमुनिभिर्यदुक्तं तथाभवदरणसंगस्य भवान्परमात्माऽरणंशरणंयेषांतेभव
दरणाभगवद्भक्तास्तेषांसंगस्यचमहत्त्वं नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः।तेपुनंत्युरुकाले
नदर्शनादेवसाधवइत्यादिनामुनिभिर्यदुक्तं तत्तथाभूतंसत्यंचेत्तदाजनिमृतिभयंमेकिमपिनास्ति
परमेश्वरनामोच्चारणादीनांयथाकथंचिन्मयिविद्यमानत्वाद्यदिभूतार्थवादोनस्वीक्रियतेकिंतुप्रशं

मृगं व्याधं कुब्जां शबरतनयां शं त्वमनयस्तथा गोपान् गो-
पीः किमु विदधितं तैस्त्वयि विभो ॥ वदान्यस्तत्राभूर्मयि
कृपणतां केन गमितः पयोधौ श्रांतो वा भजसि शयनं त्वं
किमधुना ॥ ११ ॥

सावादः स्तुतिवादस्तदाशास्त्रेनिरयस्यनरकस्यकथनमपिमृषास्यात् बालानामिवजनानांयथेष्ट
प्रवृत्तिनिवर्तकभीतिवचनत्वादित्यर्थः ॥ १० ॥ मृगादित्वद्भक्तानामिवममापित्वच्छरणत्वात्तां
स्तारयित्वामत्तारणविलंबेमयिकश्चिदपराधस्त्वंवापयोधौश्रांतःशयनंभजसीत्याह ॥ मृगमिति ॥
हेविभोमृगादींस्तथागोपान्गोपीश्चशंसुखंत्वमनयस्तेभ्यःसर्वेभ्योनित्यसुखंत्वंप्रापितवान् नयते
र्द्विकर्मकत्वात्संप्रदानाविवक्षयाकर्मसंज्ञायांमृगादिशब्देभ्योद्वितीयातैर्मारीचादिभिस्त्वयिपूर्णका
मेउवितर्केकिंविदधितमुपकृतं येनतत्रतेषुस्वस्वरूपसुखदानेनवदान्यउदारोऽभूरभवोमयिचकेनाप

राधेनकृपणतांगमितःप्रापितोसि वाऽथवात्वयिकृपणतायाअसंभावितत्वात् प्रीत्याविरोधेनवात्व 
यिदत्तचित्तांस्तारयन् श्रान्तःसन्नधुनामत्तारणसमयेपयोधौशयनंभजसिप्रजाःपालयवाशयनंकुरु
 ममपालनंतवावश्यंकर्तव्यमितिभावः ॥ ११ ॥ भगवन्मार्गस्थितानांदुर्गतिःकदापिनभवतीति
तन्मार्गस्थितिमेवप्रार्थयन्नाह ॥ भ्रमन्निति ॥ हेनाथपश्वादिनानायोनीर्जन्मानिभ्रमन्नहंकचिद
पिविश्रांतिंसुखंनागमंनप्रापमिदानींमनुष्यदेहप्राप्तौसुदैवात्शुभादृष्टवशात्कथमपित्वन्मार्गमधि

भ्रमन्योनीर्नाथ क्वचिदपि न विश्रांतिमगममिदानीं त्वन्मार्गं
कथमपि सुदैवादधिगतः ॥ न यस्मिंस्ते मार्गे किमपि भयमा-
हुर्जनिमृतेस्ततो भ्रष्टो मास्यामिति मयि कृपां त्वं विरचयेः
॥ १२ ॥ विवेकः सत्संगो विमलनयने मे न भवतः कथं न
स्यात्स्वामिन् शुभसृतिपरित्यागकुसृतिः ॥

गतोस्मियस्मिंस्तेमार्गेमहांतोजनिमृतेःकिमपिभयंनास्तीत्याहुरतस्ततस्तेमार्गात् भ्रष्टश्च्युतोमा
स्यामहंनभवेयमितिमयिकृपांत्वंविरचयेःकुर्याइत्यर्थः ॥ १२ ॥ ननुविवेकसत्संगलक्षणेभयनेत्र
सत्वेकथंममार्गाद्भ्रष्टताप्रसक्तिर्यतोभ्रष्टोनस्यामितिप्रार्थ्यतइतितत्राह ॥ विवेकइति ॥ हेस्वा 
मिन्विवेकःसदसद्विचारःसतांवीतरागाणांसंगश्चेत्युभेविमलनयनेमेनभवतोऽतः शुभायासृतिर्मा
र्गस्तस्याःपरित्यागेनयाकुसृतिःकुमार्गः सामेकथंनस्यादतस्त्वन्मार्गभ्रंशप्रसक्तेःसत्त्वात्कृपयाभ

क्तिसहितंप्रज्ञाचक्षुःस्वज्ञाननेत्रंमे वितरदेहियतस्त्वन्मार्गस्थोऽहममरपुरंनम्रियतइत्यमरंसर्वाधिष्ठान त्वात्पुरमेवंभूतंत्वांसुखमनायासंयथास्यात्तथाऽयेप्राप्नुयामित्यर्थः ॥ १३ ॥ कुकर्मणिस्थितस्त्वंसं सारमार्गंपरित्यज्यामरपुरंमांकथंप्राप्स्यसीतितत्राह ॥ यथेति ॥ हेस्वामिन्यथाभंगायाः भोक्तुर्भ क्षतःपुरुषस्ययदनुचरितंविरुद्धचेष्टितंतन्नृपोराजानगणयेत् तद्वत्त्वमायारूपभंगयाऽऽवृतादृक्विवे

अतः प्रज्ञाचक्षुर्वितर कृपया भक्तिसहितं यतस्त्वन्मार्गस्थो
ऽहममरपुरं त्वां सुखमये ॥१३॥ यथा भंगाभोक्तुर्यदनुचरितं
तन्न गणयेन्नृपस्तद्वन्मे किं विगणयसि मायावृतदृशः ॥ ततः
स्वामिन्मा संसरणपदवीं मानुगमय कृपादृष्टिंकृत्वा स्वज-
नपरिवारे गणय माम् ॥ १४ ॥ दरिद्रा राजानस्त्वयि पररतिं
ये न दधते दरिद्रा राजानस्त्वयि पररतिं ये विदधते ॥

कदृष्टिर्यस्यतस्यमेममापियद्विरुद्धमनुचरितंतत्किंविशेषेणगणयसि ततोममविरुद्धचेष्टितगणन स्यायुक्तत्वात् तत्फलभूतांसंसारपदवींसंसारमार्गंमामांत्वंमानुगमयकिन्तुकृपादृष्टिंकृत्वास्वस्यस्वा त्मनोयेजनाभक्तास्तेषांपरिवारेकुटुंबेसमूहेइतियावत् मांगणयमदीयोयंपालनीयइति ॥ १४ ॥ भगवद्भक्तजनेषुतत्प्रीतेरेवमुख्यत्वात्सर्वोत्तमत्वेनतांप्रतिपादयंस्तामेवप्रार्थयति ॥ दरिद्राइति ॥ हेस्वामिन्येराजानऐश्वर्यवन्तोऽपिपरंतुत्वयिपरमसुहृदिपरोत्कृष्टयारतिरनुरक्तिस्तांनदधतेनधार

यंतितेदरिद्राइत्यहंजाने तेषांदरिद्रतायादुर्गतेःसंभावितत्वात् येतुदरिद्राअपिपरंतुत्वयिपररतिंविद
धतेकुर्वंतितेराजानइत्यहंवेद्मि तेषांभावितवैश्वर्यप्राप्तेःसंभावितत्वात् ॥ अतएवंतवप्रीतेरेवसर्वोत्कृ
॥ ६ ॥ ष्टत्वात् हेउदारस्वपददातस्त्वमधुनापरमकृपयामेममस्वकीयेपादाब्जेतांपरमपददांप्रीतिंघटयसंपा
दयेत्यर्थः ॥ १५ ॥ भगवत्प्रीतिंप्रार्थयित्वातत्फलभूतांशान्तिप्रार्थयति ॥ कदेति ॥ भोःस्वामिन्

अतः प्रीतिं स्वामिन् परमपददां मे त्वमधुना स्वकीये पादाब्जे
परमकृपयोदार घटय ॥ १५ ॥ कदाहं भोः स्वामिन्नियतमन-
सा त्वां हृदि भजन्नभद्रे संसारे ह्यनवरतदुःखेऽतिविरसः ॥
लभेयं तां शांतिपरममुनिभिर्याह्यधिगता दयां कृत्वा त्वं मे वि-
तर परशांतिं भवहर ॥ १६ ॥ चतुर्द्धा नाथ त्वा निरवधि भ-
जन्त्यः सुखमदा अयं कश्चित्तेषां यदि भवति चास्मा अपि नकिम् ॥

परममुनिभिर्वशिष्ठव्यासप्रभृतिभिर्हिप्रसिद्धमधिगताप्राप्तायाशांतिस्तांतवप्रीतेःफलभूतांशांतिम
हंकदालभेयंप्राप्नुयामितिसंबंधः किंकुर्वन् अनवरतंनिरंतरंदुःखंयस्मिंस्तस्मिन्नभद्रेऽमंगलेसंसारेऽति
विगतोरसोयस्यसोऽहंत्वांनियतंनिरुद्धंयन्मनस्तेनहृदिस्वांतेभजन् हेभवहरत्वंदयांकृत्वामेप्रार्थमा ॥ ६ ॥
नायपरोत्कृष्टातवस्वरूपस्थितिलक्षणायाशांतिस्तांवितरदेहीत्यर्थः ॥१६॥ चतुर्विधाभजंतेमांजनाः
सुकृतिनोर्ज्जुन ॥ आर्तोजिज्ञासुरर्थार्थीज्ञानीचभरतर्षभ १तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते॥

प्रियोहिज्ञानिनोऽत्यर्थमहंसचममप्रियः ॥१॥ उदाराःसर्वएवैतेज्ञानीत्वात्मैवमेमतमित्यत्र चतुर्द्धाभज तांज्ञानिनोविशेषत्वेनपरमेश्वरप्रीतिविषयत्वेनचप्रतिपादनात्तत्राप्यन्वयव्यतिरेकाभ्यांतद्विशेषणी भूतज्ञानस्यैवोत्कृष्टत्वात् तत्प्रार्थयति ॥ चतुर्धेति ॥ हेनाथ त्वां चतुर्द्धाभजद्भ्यस्त्वंनिरवधिनित्यं सुखप्रदाःदत्तवान् तेषांमध्येऽयंप्रार्थयितायदिकश्चिद्भवतितर्ह्यस्मैअपि भोस्वामिन् भवान्सुखंकिंन दातानदास्यतियद्यपिदास्यतितदपितथापिबुधंज्ञानिनंस्ववपुषंज्ञानीत्वात्मैवमेमतमितिस्वस्वरूपं

सुखंदाता स्वामिंस्तदपि बुधमात्थ स्ववपुषमतस्तत्त्वज्ञानं
मयि विघटयेस्त्वं हि कृपया ॥ १७ ॥ कदाहं भोः स्वामिन्निग-
ममतिवेद्यं शिवमयंश्चिदानन्दं नित्यं श्रुतिहृतपरिच्छेदनिव-
हम् ॥ त्वमर्थाभिन्नं त्वामभिरमइहात्मन्यविरतं मनीषा-
मेवं मे सफलय वदान्य स्वकृपया ॥ १८ ॥

त्वमात्थवदसिस्मातःकृपयातत्त्वज्ञानंत्वंमयिविघटयसंपादयेत्यर्थः ॥ १७ ॥ प्रत्यगभिन्नंत्वांजान न्नहंस्वात्मनिकदारमइतिप्रार्थयति ॥ कदाहमिति ॥ भोःस्वामिंस्त्वामयन्जानन्नहमिहसाक्षादप रोक्षरूपआत्मन्यविरतंनिरंतरंकदाऽभिरमे कथंभूतंत्वांनिगमोवेदस्तज्जन्यायामतिर्बुद्धिस्तद्वेद्यंतं त्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः अतएवशिवं कल्याणस्वरूपंआनंदोब्रह्मेतिव्यजानादितिश्रुतेः श्रुत्याहृतोदूरीकृतःपरिच्छेदस्यकल्पितभेदस्यनिवहःसमूहोयस्मिंस्तं एकमेवाद्वितीयमित्यादिश्रु

 तेः अतएवत्वमर्थोजीवस्तदभिन्नंतत्त्वमस्ययमात्माब्रह्मप्रज्ञानंब्रह्म अहंब्रह्मास्मीत्यादिश्रुतेरित्ये 
वंभूतांमेमनीषांदृढेच्छांहेवदान्यस्वकृपयात्वंसफलयस्वशरणागतोपेक्षाया अयोग्यत्वादित्यर्थः ॥
 ॥ १८ ॥ अधुनास्मिञ्जगतिभगवत्क्रीडारूपतांप्रतिपादयंस्तस्मात्स्वस्यबहिर्भावंप्रार्थयति ॥ व
राकमिति ॥ हेआद्यसर्वाधिष्ठानप्रथममादौवराकंदुर्बलंजीवंदुःखजलधिंक्लेशरूपसंसारसागरेत्वमन
यःप्रापितवान् अधुनातस्मात्तमुद्धर्तुंतस्मैज्ञानमुपदिशसि अतोहेस्वामिन्निदंजगत्तवक्रीडनमित्य

वराकं जीवं त्वं प्रथममनयो दुःखजलधिंततश्चाद्योद्धर्तुं तमुप-
दिशसि ज्ञानमधुना ॥ अतो जाने स्वामिंस्तव जगदिदं क्रीडन-
मिति बहिष्कारं मेऽस्माद्धितकर कुरुष्वाशु कृपया ॥ १९ ॥
इदानीं ते नाथ प्रभवतु भवाब्धेः परिकरः समुद्धर्तुंमारातिम-
करविभीतं त्वदरणं ॥

हंजाने हेहितकरास्मात्स्वक्रीडनान्मेबहिष्कारमाशुकृपयाकुरुष्वतवक्रीडयाममश्रांतत्वादित्यर्थः ॥
॥ १९ ॥ इदानींसंसाराब्धिनिमज्जनादत्यन्तभीतस्तस्मात्स्वस्योद्धारायभगवतःपरिकरंप्रार्थयति
॥ इदानीमिति ॥ हेनाथेदानीं भवाब्धेर्मामुद्धर्तुंतेपरिकरोदृढकटिबंधोभवतु कथंभूतंमां अरातयः 
कामादयस्तद्धन्तश्चयेशत्रवस्तएवमकरास्तैर्विभीतमतएवत्वदरणंत्वमरणंशरणंयस्यतमित्यर्थः ॥
यदातुहेस्वामिन्नयमसुभृत्प्राणधार्य्येतर्हिमनुष्यदेहप्राप्तौचलितमप्राप्तंसंसारसागरस्यपरतोरंतवपदं

यस्यतादृशोभवेत्तदांऽतःसंसारसागरस्यमध्येगच्छेद्यतोमध्यात्तीरदृक्सत्संगद्वारातीररूपतवपद
स्यदर्शनसाधनमपिनमिलति इतरयोनिषुसत्संगतेरनधिकारात् ॥ तथाचश्रुतिः ॥ इहचेदवेदी
दथसत्यमस्ति नचेदिहावेदीन्महतोविनष्टिरिति ॥ २० ॥ इदानींचतुरशीतिलक्षयोनीर्नाट्यरू
पेणवर्णयन् नृपोयथानटस्यनाट्यंपश्यन्प्रसन्नश्चेत्तमभीष्टंनयति नोचेत्तस्यपुनर्नाट्यंनपश्यति त
थात्वमप्युभयथामेसंसारनिवृत्तिंकुर्वित्याशयेनाह ॥ हेमहाराजहेस्वामिंस्तव परमदातुरत्युदारस्य

यदैतर्हि स्वामिंश्चलितपरतीरोयमसुभृत्तदा गच्छेदन्तर्मिल-
ति न यतस्तीरदृगपि ॥ २० ॥ महाराज स्वामिंस्तव परमदा-
तुश्च पुरतः स्वयोनीनां लक्षं जलधिवसुसंख्यं कथमपि ॥ व्य-
दर्शि स्वं नाट्यं यदि च मुदितोऽसि त्वममुना तदाभीष्टं
दद्या न तु यदि ततो वारय च माम् ॥ २१ ॥

पुरतोऽग्रेस्वंस्वकीयंनाट्यंजलधिवसुसंख्यंस्वयोनीनांलक्षंजलधिशब्देनचतुरंकःवसुशब्देनाष्टांकश्च
लक्ष्यते तथाचांकानांवामतोगतेश्चतुरशीतिसंख्यमित्यर्थः ॥ कथमपिदुःखितत्वादिप्रकारेणमया
व्यदर्शिविशेषेणदर्श्यतेस्म अमुनानाट्यदर्शनेनयदित्वंमुदितःप्रसन्नोसितदामह्यमभीष्टंवांछितंस्व
पदंदद्याःयदित्वमुनात्वंप्रसन्नोनभवसि तदाततोनाट्यात्त्वंमांवारयेदानींत्वंनाट्यंमाकुर्विति उभ
यथापिममसंसारनिवृत्तिःकर्तव्येतिभावः ॥ २१ ॥

अधुनासंसारंपरित्यज्यात्मरमणंप्रार्थयति ॥ कदाहमिति ॥ हेस्वामिन्नहंभवंहित्वातस्मिन्स्वात्म
वपुषिकदानित्यंरमइतिसंबन्धःकथंभूतंभवंजनिस्मृतिमयं पुनर्दुःखेननिबिडंसंघनीभूतंकथंभूतेस्वा
॥ ८ ॥ त्मवपुषिसत्येत्रिकालाबाध्ये पुनरनवरतंनिरंतरं सुखरूपेतस्मिन्कस्मिन्यस्मिंस्तेप्रसिद्धान्यासव
सिष्ठप्रभृतयोनिखिलमुनयोरमन्ते कीदृशामुनयोब्रह्मणोरसोस्तियेषांतेब्रह्मरसिकाःपुनःकृतंसक

कदाऽहं हेस्वामिन् जनिमृतिमयं दुःखनिबिडं भवं हित्वा स-
त्येऽनवरतसुखे स्वात्मवपुषि ॥ रमे तस्मिन्नित्यं निखिलमुन-
यो ब्रह्मरसिका रमन्ते यस्मिंस्ते कृतसकलकृत्या यतिवराः
॥ २२ ॥ चिदानंदे शुद्धे त्वयि मलमयान् देहखगुणानधिष्ठाने-
ऽध्यारोप्यभजति हि दण्डं जनिमृतिम् ॥ अतो मेधीवृत्तौ
झटिति गुरुवाक्याज्जनिभृति समुद्भूयाध्यासं जहि सजनकं
चिद्घनवपुः ॥ २३ ॥

लंकृत्यंयैस्तेकृतकृत्याइत्यर्थः पुनर्यतिषुमोक्षार्थयत्नशीलेषुवराःश्रेष्ठाइत्यर्थः ॥ २२ ॥ रज्जौसर्पवद
संगात्मनिदेहेंद्रियादीनामारोपस्यैवसंसारहेतुत्वात्समूलंतन्नाशंप्रार्थयति॥चिदानन्देइति॥हेचिद्घ ॥ ८ ॥
नवपुः चिदानन्देशुद्धेऽधिष्ठानेत्वयिदेहश्चखानिचक्षुरादीन्द्रियाणिचतेषांगुणान्धर्मांश्चस्थूलत्वां
धत्वादीनध्यारोप्यायंजीवोहियस्माज्जनिमृतिंदण्डंभजति अतोगुरुवाक्याज्जनिंबिभर्तीतिजनि

भृत्तस्यांमेधीवृत्तौसम्यक्निःसंशयमुद्भूयाभिव्यज्यजनकेनाज्ञानेनसहवर्तमानमध्यासंमिथ्याभूत देहादिप्रपंचारोपंत्वंजहिनाशयेत्यर्थः ॥ २३ ॥ स्वप्रकाशात्मनःसाक्षाद्वेदप्रतिपाद्यत्वस्यमनश्च क्षुरादिविषयत्वस्यचाभावेऽपिभक्तिवेद्यत्वंसप्रमाणमाह ॥ नेति ॥ हेविभोवेदोजात्यादिर हितंत्वांप्रतिसाक्षाच्छक्तिवृत्त्यानवदति जातिगुणक्रियासंबंधैरेवशब्दःप्रवर्तते जात्यायथाब्राह्मणो घटःपटइति गुणेनयथाशुक्लोनीलःपीतइति क्रिययायथापाचकःपाठकइति संबन्धेनयथाकुंडली

न वेदः साक्षात्त्वां प्रतिवदति जात्यादिरहितं मनश्चक्षुर्वाक्
त्वयि चिति न निर्गच्छति विभो ॥ तथाऽपि त्वं साक्षाद्भवसि
हृदये भक्तिविमले यतो भक्त्या वेद्योऽहमिति वदनं तेऽतिवि-
शदम् ॥ २४ ॥ अनादौ संसारे जनिमृतिमये दुःखितमना
मुमुक्षुः सन्कश्चिद्भजति हि गुरुं ज्ञानपरमं ॥

चक्रीत्यादिः त्वयिचितिमनोननिर्गच्छतिप्राप्नोति चक्षुर्वाक्चचक्षुरुपलक्षितज्ञानेन्द्रियपंचकंवागुप लक्षितकर्मेन्द्रियपंचकंचत्वयिननिर्गच्छति यतोवाचोनिवर्तन्तअप्राप्यमनसासह परांचिखानिव्य तृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनान्तरात्मन्इत्यादिश्रुतेः तथाऽपितेषामविषयत्वेपि भक्तिविमले हृदयेत्वंसाक्षाद्भवसि यतोभक्त्याऽहंवेद्योबोद्धव्यइतितेवदनमतिविशदम् भक्त्यामामभिजाना तियावान्यश्चास्मितत्वतइत्याद्यतिस्फुटमित्यर्थः ॥ २४ ॥ अधुनामुमुक्षुर्यज्ज्ञात्वाक्लेशरहितोभव

॥ १ ॥ तितंभजइत्याह ॥ अनादाविति ॥ कश्चनमुमुक्षुर्जनिमृतिमये अनादौसंसारेदुःखितंमनोयस्यै वंभूतःसन् ज्ञानंपरमंयस्यतंगुरुंहिप्रसिद्धंभजातिसेवते. ततस्तस्माद्गुरोर्यंप्रत्यगभिन्नंपरमात्मानंज्ञात्वा पुनःक्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानांदुःखानांवानिवहैःसमूहैःस्वमात्मानंनतुदति न पीडयति तंदेवंद्योतनात्मकमहंभजेयस्यभजनात्परएवभवति ब्रह्मविद्ब्रह्मैवभवतीत्यादिश्रुतेः॥२५॥ भगवत्प्रतिज्ञातेविश्वासंकृत्वातदर्थंस्वल्पमपियोऽनुतिष्ठतिसकृतार्थोभवतीत्याह ॥ मदर्थमिति ॥

ततो ज्ञात्वा यं स्वं तुदति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं
भवति च परो यस्य भजनात् ॥ २५ ॥ मदर्थं येनेषत्सुकृतम-
पि विश्वस्य चरितं कथं चित्तं कंचिन्न कुगतिमहं सौम्यगमये ॥
प्रतिज्ञां ते ज्ञात्वाऽहमिति सुकृतं स्वं त्वयि नयन् कृतार्थो नेष्ये
स्वं प्रविदितपदं ते सुकृपया ॥ २६ ॥

येनपुरुषेणविश्वस्यविश्वासंकृत्वाईषदपिस्वल्पमपिसुकृतंकथंचित्केनापिप्रकारेणमदर्थंचरितंकृतंतंकं चिद्वर्णाश्रमिणंतदितरंवाहेसौम्यार्जुनाहंकुगतिंकुत्सिततिर्यग्गतिंनगमयेनप्रापयेनहिकल्याणकृत् कश्चिद्दुर्गतिंतातगच्छति स्वल्पमप्यस्यधर्मस्यत्रायतेमहतोभयादितिचतेतवपरमेश्वरस्यप्रतिज्ञांज्ञा ॥ १ ॥ त्वाऽहंस्वंस्वकीयंसुकृतंत्वयिबिम्बभूतेईश्वरेनयन्समर्पयंस्तेसुकृपयाकृतार्थःसन्स्त्रमात्मानंतेप्रविदि तंवेदप्रसिद्धंयत्पदंस्वरूपंतत्रनेष्ये प्रापयिष्यइत्यर्थः ॥ तथाचश्रीमद्भागवतेप्रह्लादवचनम् ॥ नै

वात्मनःप्रभुरयंनिजलाभपूर्णोमानंजनादविदुषःकरुणोवृणीते ॥ यद्यज्जनोभगवतेविदधीतमानं तच्चात्मनेप्रतिमुखस्ययथामुखश्रीरिति ॥ २६ ॥ ननुविवेकादिसाधनसंपत्त्यातत्त्वज्ञानंसंपाद्य कृतार्थोभव किमितिमदर्थंकर्माणिकुरुषइतितत्राह ॥ विवेकइति ॥ हेभगवन्ब्रह्मसत्यंजगन्मि थ्येतिनित्यानित्यवस्तुविचारः । वैराग्यमिहामुत्रार्थफलभोगालिप्सा । अपरेशमदमाद्याःषट् । शमोमनोनिग्रहः । दमश्चक्षुरादिबाह्येंद्रियनिग्रहः ।उपरतिःशब्दादिभ्यइंद्रियाणांस्वतोव्यावृत्तिः ।

विवेको वैराग्यं न च शमदमाद्याः षडपरे मुमुक्षा मे नास्ति
प्रभवति कथं ज्ञानममलम् ॥ अतः संसाराब्धेस्तरणसरणिं
मामधिनयन् स्वबुद्धिं श्रौतीम्मे वितर भगवंस्त्वं हि कृपया
॥ २७ ॥ खलैः कामाद्यैस्त्वच्चरणशरणोऽहं प्रतुदित इदानीं कं
यामि त्वदधिकबलं नाथ शरणम् ॥

तितिक्षाविचारेणशीतोष्णादिसहनं । श्रद्धागुरुवेदान्तवाक्येषुविश्वासः । समाधानंचित्तैकाग्रते त्येतेविवेकादयोमेममनसंति । हेधातर्मेबंधमोचनंकदाभविष्यतीतिमुमुक्षामोक्षेच्छाचमेनास्तीति साधनचतुष्टयसंपत्यभावादमलंसंशयविपर्ययरहितंज्ञानंकथंप्रभवतिप्रकर्षेणभविष्यत्यतोमांशरणा गतंसंसाराब्धेस्तरणस्यसरणिंतत्त्वज्ञानलक्षणमार्गेऽधिनयन्प्रापयंस्त्वंकृपयाश्रौतींतत्त्वमस्यादिम हावाक्यजनितांस्वबुद्धिमात्मज्ञानंमेमह्यंवितरदेहीत्यर्थः ॥ २७ ॥ इदानींभगवद्भजनेविक्षेपकर्तॄं

णांविनाशंप्रार्थयति ॥ खलैरिति ॥ हेनाथकामःआद्यःप्रथमोयेषांक्रोधादीनांतेकामाद्या आसुर
सम्पद्रूपाः । यद्वाकाम आद्योमुख्योयेषांतेकामाद्याआसुरसम्पद्धन्तस्तैः खलैः स्वभावतःपरदुः
॥१०॥ खदैर्धूर्तैस्तवचरणंशरणंयस्यसोऽहंप्रतुदितःपीडितःसन्निदानींत्वत्तोऽधिकंबलंयस्यतंकंशरणमाश्रयं
यामिप्राप्नोमि । त्वदधिकबलःकोपिनास्तियच्छरणंव्रजेयमितिभावः ॥ अतोममत्वच्छरणत्वात्
त्वत्तोऽधिकबलस्यपरस्याभावाच्चमयिशरणागतेकृपादृष्टिंकृत्वापापकर्मणिनिःशेषेणयेरतास्तान्ख

अतो दृष्टिं कृत्वा मयि जहि खलान्पापनिरतांस्त्वयाऽनेके
नष्टा दशवदनकंसप्रभृतयः ॥ २८ ॥ विवेकाद्यैः सौम्यैः स्वज-
नरत संगं मम कुरु प्रभावाद्येषां मेऽद्यभवतु पदं ते स्फुटतरम्
॥ इदानीं क्व व्यग्रः कृपणवचनं यन्न श्रृणुया निमग्नेऽब्धौ
स्वामिन्मयि तव कृतिः किं फलमियात् ॥ २९ ॥

लांस्त्वंजहिमारय । तर्हीतादृशोममस्वभावोनास्तीतिचेन्नेत्याह ॥ त्वयाऽनेकइति ॥ दशवदनो
रावणःकंसश्चतौप्रभृतीआदीयेषांतेऽनेकेदुष्टास्त्वयानष्टानाशिताइत्यर्थः ॥ २८ ॥ इदानींदैवसंप
दस्तद्धतांचसंगंप्रार्थयन्नत्यन्तोद्विग्नोभगवन्तमुपालभते ॥ विवेकाद्यैरिति ॥ हेस्वजनरत । विवे ॥१०॥
कआद्यःप्रथमोमुख्योवायेषांतै दैव संपद्रूपैस्तद्वद्भिर्वासौम्यैःस्वभावतः परसुखकरैर्ममसंगंकुरु ।
येषांविवेकादीनांतद्धतांवाप्रभावात्प्रतापान्मेऽद्यमनुष्यदेहप्राप्तिसमयेतेपदंस्वरूपंस्फुटतरंसाक्षाद्ध

वतुभवेत् ॥ हेस्वामिन्निदानींकिंकस्मिन्व्यग्रोदत्तचित्तोऽसि । यद्यस्मात्कृपणस्यदीनस्यमेवचनं त्वंनशृणुयाः । हेस्वामिन्मयित्वच्छरणेऽब्धौसंसारसागरेनिमग्नेसतितवकृतिंप्रयत्नतःकिंफलमिया त्प्राप्नुयादित्यर्थः ॥ २९ ॥ इदानींदृष्टान्तेनस्वमनश्चक्षुरादीनांपरमेश्वरपदप्राप्तिंप्रार्थयति ॥ कृपा लविति ॥ हेगोविंदहेकृपालोव्रजभुवंगोकुलभूमिमधिष्ठायाश्रित्यजनितःप्रादुर्भूतःसन् व्रजस्थान्

कृपालो गोविंद व्रजभुवमधिष्ठाय जनितो व्रजस्थान् गोपान् गाः
स्वपदमनयस्त्वं मधुरिपो ॥ इदानीं मे स्वांते प्रकटितवपुस्त्वं
व्रजनिभे मनश्चक्षुर्वाग्गां गमय पदवीं स्वां स्वकृपया ॥ ३० ॥
नृसिंह स्वामिन् भो मम मनसि यूपे त्वमधुना स्वयं प्रादुर्भू-
याऽसुरसदृशमोहं जहि विभो ॥ सुखं प्रह्लादं नेतुमिति म-
नुषे चेदहमपि ततो न्यूनो दुःखैस्त्वदनुशरणं चापि गतवान् ॥ ३१ ॥

गोपान्तत्स्थाःगाश्चत्वं स्वपदमनयस्तद्वदिदानींहेमधुरिपोव्रजनिभेव्रजसदृशेमेस्वान्तेमनसिप्र कटितंवपुर्येनसत्वंमेमनश्चक्षुश्चवाक्कासौगौश्चेतिवाग्गौस्तांचगोपस्थानामनश्चक्षुरादयः गोसदृ शावाग्जिह्वादयस्तानेतान्स्वांस्वकीयांपदवींमार्गंस्वकृपयागमयप्रापय । त्वांविहायैतेऽन्यत्रन गच्छेयुरितिभावः ॥ ३० ॥ अधुनामोहासुरविनाशंस्वसुखप्राप्तिंचरूपकेणप्रार्थयति ॥ नृसिंहे ति ॥ भोनृसिंहस्वामिन्अधुनाममनसियूपेस्तंभेस्वयमयत्नेनप्रादुर्भूयाऽसुरेणहिरण्यकशिपुना

सदृशोयोमोहोऽज्ञानंतंहेविभोत्वंजहिमारयेत्यर्थः । अहंतुप्रह्लादंप्रह्लादायसुखंनेतुंप्रापयितुंप्रादुर्भूतोऽभूवमितिचेद्यदित्वंमनुपेतदाहमपिततःप्रह्लादाद्दुःखैरन्यूनस्तत्सदृशोऽधिकोवास्मि । तर्हिंसतुमच्छरणोऽभूदतआह त्वदनुशरणंचाहमपिगतवान्प्राप्तोऽस्मीत्यर्थः ॥ २१ ॥ अधुनास्वबुद्धौश्रीकृष्णस्याविर्भावपूर्वकाज्ञाननाशंरूपकेणप्रार्थयति ॥ अयेकृष्णेति ॥ अयेइतिकोमलालापे । हेकृष्णस्वामिन्ममतिरूपायाजननीतवमातादेवकीतस्यांनिजजनिंस्वोत्पत्तिंविधायकृत्वा

अये कृष्ण स्वामिन्मम मतिजनन्यां निजजनिं विधायात्रा-
बोधं जहि झटिति कंसं दृढरिपुम् ॥ विवेकं ते तातं प्रसभमनु-
रुन्धानमधियं न हन्याश्चेन्नाथ प्रभुरिति यशस्त्वामभिभवेत्
॥ ३२ ॥ अये राम स्वामिन्मतिमवनिजां मेऽनु रमयेर्दशा-
स्याऽहंकारं जहिहि सुतरां दुष्टगतिदम् ॥

ऽत्रममत्यामबोधमज्ञानरूपंदृढरिपुंकंसंझटितिशीघ्रंत्वंजहिमारयेत्यर्थः । तर्ह्यबोधलक्षणेनकंसेनममकोऽपराधःकृतोयेनतंमारयेयमितिचेत्तत्राह ॥ विवेकमिति ॥ तवतातोजनकोयोविवेकोविवेकेनैवबुद्धौज्ञानस्योत्पत्तेस्तंप्रसभंबलात्कारेणानुरुंधानंप्रतिबध्नंतं । अतएवाधियंनास्तिधीर्बुद्धिर्यस्ययस्माद्वातमधियंहेनाथचेद्यदित्वंनहन्यानानाशयेस्तदाप्रभुःसमर्थोऽयंदुष्कृतानांविनाशायेतितेयशःकीर्तिस्त्वामभिभवेत्तिरस्कृत्यत्यजेदित्यर्थः ॥ ३२ ॥ इदानींस्वमतेःप्रसादलक्षणमनुरमण

॥११॥

महंकारविनाशंचप्राथयन्स्वस्यपरमात्मपदेप्राप्तिमपिरूपकेणप्रार्थयति ॥ अयेरामेति ॥ हेराम स्वामिन्मेमतिरूपामवनिजांसीतामनुरमयेस्त्वंप्रसादयेः । सुतरामत्यंतंदुष्टगतिदंदशास्याहंकाररावणरूपमभिमानंचत्वंजहि ॥ ननुबहिस्स्थितस्यममतवमतिरमणेऽहंकारनाशेचकथंसामर्थ्यमिति चेत्तत्राह ॥ रमन्तइति ॥ हेविभोतेप्रसिद्धाःप्रवरमतयोवसिष्ठव्यासप्रभृतयोयस्मिन्परेव्योमनिचिदाकाशेरमन्ते सएवांतर्यामीत्वंमामहमोऽहंकारलक्षणस्यरावणस्यसुपदंरावणसिंहासनस्थानीयम

रमन्ते यस्मिंस्ते प्रवरमतयो व्योमनि परे स एवान्तर्यामी
सुपदमहमो मान्नय विभो ॥ ३३ ॥ अये क्रोड स्वामिन्ममहृदि
समुद्भूय च विधौ हिरण्याक्षं मोहं जहि सुधिषणा भूमिहर-
णम् ॥ सुबुद्धिक्षोण्या मे स्थितिमथ विधायात्र विबुधान् वि-
वेकादीन्वास्याः समधिगतशांतिर्वसतु ना ॥ ३४ ॥

हंकाराध्यासाधिष्ठानंचैतन्यं । तत्रमांबिभीपणस्थानीयंत्वंनयप्रापयेत्यर्थः ॥ ३३ ॥ इदानींहिरण्याक्षलक्षणाविवेकविनाशायसुमतिरूपभूमौदेवानांनिवासपूर्वकजीवशान्त्यैचशूकरंभगवंतंप्रार्थयति ॥ अयेक्रोडेति ॥ हेक्रोडशूकरस्वामिन्ममहृदिविधौमेमनोरूपेवेधसिसमुद्भूयसम्यगुत्पद्यहिरण्याक्षंमोहंहिरण्याक्षासुरलक्षणमविवेकंत्वंजहि । कीदृशंसदसद्विचारशीलाबुद्धिस्सुधिषणासैवभूमिस्तस्याहरणंहर्तारं । अथानंतरंमेसुबुद्धिरूपक्षोण्याभूमेःस्थितिंविधायकृत्वाऽत्रास्यांसुबुद्धिभू

 मौविवेकादीन्विबुधान्देवांस्त्वंवास्यास्तेषावासंकारय । येननाऽयंपुमान्समधिगताग्राशांति 
येंनतथाभूतःसन्वसतुनिवासंकुर्यादित्यर्थः ॥ ३४ ॥ अथमत्स्याद्भगवतोमनुवत्स्वरक्षांप्रार्थयति ॥
 ॥ अयेमत्स्येति ॥ हेमत्स्यस्वामिन्नसमयलयादकांडप्रलयात्त्वंमनुंजुगडिथररक्षिथ । तस्मैपोतंद
त्वाबतेत्यनुकंपायांतंमनुमिवसकृदेकप्रयत्नायतवास्मीतिचयाचतेअभयंसर्वदातस्मैददामीतिव्रतं
ममेतिस्वव्रतंस्मृत्वाहेनाथमामपिभवान्रक्षतु ॥ स्वात्मानंप्रतिभगवतोव्रतस्मरणयोग्यतांदर्शय

अये मत्स्यस्वामिन्नसमयलयात्त्वं जुगडिथ मनुं दत्वा पोतं
तमिव बत मां रक्षतु भवान् ॥ भवाब्धौ मज्जंतं त्वदितरम-
पश्यंतमरणं व्रतं स्मृत्वा नाथ त्वयि निहितसर्वं प्रभुवरे ॥
॥ ३५ ॥ बलेरग्रे स्वामिन्कथमखिलभृद्देहि वचनं तथा ते गां-
गेये स्वकवचनहानिर्व्रत विभो ॥

न्स्वंविशिनष्टि ॥ भवाब्धौमज्जन्तमित्यादिना ॥ संसारसागरेनिमज्यमानंत्वदितरमरणंशरणम
पश्यन्तं । पुनःप्रभुवरेत्वयिनिहितंसमर्पितंसर्वंयेनतथाभूतंमांभवान्पालयत्वितियोजना ॥ ३५ ॥
तवभक्ताधीनत्वात्स्वशरणस्यममापिप्रार्थनांत्वंपूरयिष्यसीत्याशयेनाह ॥ बलेरिति ॥ हेस्वामि 
न् अखिलंसर्वंबिभर्तीत्यखिलभृत्तत्संबोधनंहेऽखिलभृत् । बलेर्दैत्यस्याग्रेतेतवदेहीतिवचनंकथं ।
नकथमपिसंभवत्यखिलभृत्त्वादेव । तथाहेविभोगांगेयेगंगापुत्रभीष्मसमीपेतेस्वकवचनस्याहंश

स्त्रंनगृह्णीयामितिप्रतिज्ञात्मकस्यव्रताह्योकष्टंकथंहानिर्नकथमपिसंभवति । तथाकौन्तेयानांकुंती पुत्राणामर्जुनादीनांरथस्यनियमनंप्रेरणं । कौंतेयानामित्युपलक्षणम् । तथाचरात्रौशस्त्राणिगृही त्वोग्रसेनस्यराज्ञोरक्षणमित्यादिकर्मणिकथंतेपरिकरोदृढकटिबंधोऽखिलभृत्त्वादेवैतत्पूर्वोक्तंत्वयिन संभवति । तथाऽपिस्वभक्तानांवृद्धौवृद्धिनिमित्तंस्वकस्यपरिभवंतिरस्कारमपित्वंनगणयेः । यथास्वपुत्राणामादरेपुत्रप्रियःपितास्वपरिभवंनगणयतितद्वत्त्वमपिभक्तप्रियत्वादितिभावः ॥३६॥

कुतः कौंतेयानां रथनियमनादौ परिकरः स्वभक्तानां वृद्धौ
स्वकपरिभवं त्वं न गणयेः ॥ ३६ ॥ पुराऽवन्या प्रार्थ्यो द्रु-
हिणसहितैर्देवनिवहैः स्वयं प्रादुर्भूयेह धरणितले राम रमया ॥
धरित्र्यै देवेभ्यः परसुखमदा मे त्वमधुना तथा सौख्यं दद्या
मम मनसि शान्त्या प्रकटितः ॥ ३७ ॥

यथाद्रुहिणादिप्रार्थनयाभूमावाविर्भूय तेभ्यस्त्वंसुखमदास्तथामह्यमपिप्रार्थयतेसुखंदेहीतिप्रार्थयति ॥ पुरावन्येति ॥ हेरामपुरात्रेतासमयेपृथिव्यासहविधात्रादिदेवैःप्रार्थ्यःप्रार्थनाविषयस्त्वमिह धरणितलेरमयालक्ष्म्यासहस्वयंप्रादुर्भूयधरित्र्यैदेवेभ्यश्चपरसुखमदाःदत्तवान् तथातेनैवप्रकारेणाधुनाममममनसिशांत्यासहप्रकटितःसन्मेमह्यमपित्वंसौख्यंदद्याः रावणादिभिर्दुष्टैस्तेषांपीडितत्ववन्ममापिकामादिभिर्दुष्टैःपीडितत्वाविशेषादितिभावः ॥ ३७ ॥

अधुनारूपकेणात्माज्ञानारोपितजगन्निवर्तकंतज्ज्ञानंप्रार्थयति ॥ त्वयेति ॥ हेस्वामिन्नसंभावि
तत्वेऽपिप्रतीयमानमिदंजगत्त्वयामहसास्वतेजसासूर्येणतमइवनित्यंसर्वदा अथसाकल्येनाऽबाधि
बाधितं तथाप्यज्ञोद्रष्टास्वाज्ञानेनभवतित्वयिपेचकःसूर्येतमइवभगवद्बाधितंकुरु कुलमिवचवास्त
वतयामनुतेयतोऽतोहेस्वामिंस्त्वंमेमह्यंफाल्गुनोऽर्जुनस्तन्निभंतत्सदृशंप्रबोधंतत्त्वज्ञानंवितर। देहि
यःप्रबोधोऽर्जुनःकुरुकुलमिवेदंजगद्विभ्रमंप्रजरयेत्विनाशयेदित्यर्थः। तदुक्तंभगवता । मयाह

त्वया नित्यं स्वामिन् जगदिदमथाऽबाधि महसा तथाऽप्य-
ज्ञो द्रष्टा भवति मनुते वास्तवतया ॥ अतः स्वामिंस्त्वं मे वि-
तर कृपया फाल्गुननिभं प्रबोधं भूयो यः कुरु कुलमिवेदं प्र-
जरयेत् ॥ ३८ ॥ अहो श्रीस्ते स्वामिन्व्रजयुवतयो यन्निय-
मिताः स्वबंधूंस्त्यक्त्वाऽऽशु स्वशरणमहो त्वामधिगताः ॥

तांस्त्वंजहिमाव्यथिष्ठाइति। संक्षेपशारीरकेप्युक्तम् ॥ नित्यबोधपरिपीडितंजगद्विभ्रमंतुदतिवा
क्यजामतिः॥वासुदेवनिहतंधनंजयोहंतिकौरवकुलंयथापुनइति ॥३८॥ यथास्वशरणागतभक्ते
भ्यःशिवंत्वमदास्तथात्वच्छरणायमह्यमपिस्वकृपयाशिवंदेहीतिप्रार्थयति ॥ अहोइति ॥ हेस्वामि
न्नहोआश्चर्यरूपातेश्रीर्ययाश्रियानियमिताःप्रेरिताव्रजयुवतय आशुझटितिस्वबंधूंस्त्यक्त्वाऽहो
आश्चर्यरूपंत्वांस्वशरणंस्वकीयंशरणमधिगताःप्राप्तास्तथाऽन्येध्रुवादयस्तेभक्ताअथशुकादयःपरम

हंसाश्चत्वांस्वशरणमधिगतास्तथाऽहमपित्वास्वशरणमधिगतोऽस्मितेभ्यस्तुत्वंशिवंकल्याणमदाइ
तिपुराणप्रसिद्धंतेषुपरिशिष्टंमासुइतिवितर्कोकिंनस्मरसि।मामपिस्मृत्वाकृपादृष्ट्याशिवंदेहीतिभावः
॥३९॥अथयथात्वांमांचधूर्तानर्निदेयुस्तथात्वंमासुद्धरेतिप्रार्थयति॥इदानीमिति॥हेस्वामिन्निदानी
मलमत्यंतंदुःखितंमांस्वशरणागतंयदित्यजसि । तदाजगतिनामेतिप्रसिद्धंतेदयालुत्वमाशुसप
द्यस्तंलयमयतेप्राप्नोति । धूर्ताश्चसर्वंत्यक्त्वेश्वरंशरणंगतेऽस्मिन्परमेश्वरेणकिमुपकृतमतोयमुन्मा

तथाऽन्ये ते भक्ता अथ परमहंसा अहमपि शिवं तेभ्योऽदास्त्वं
किमु न परिशिष्टं स्मरसि मां ॥ ३९ ॥ इदानीं हेस्वामिंस्त्य-
जसि यदि मां दुःखितमलं दयालुत्वं ते नाम जगति तदा ध्व-
स्तमयते ॥ ततस्त्वामाधूर्ताः स्वजनरत निन्दंतु न यथा त-
थात्वं नाथाद्यप्रभव मम दुःखं निरसितुम्॥४०॥यदि त्वंहेनाथ
श्रुतिविहितचर्य्यन्नरवरंभवाब्धेरुद्धर्त्ता कथमपिन चित्रंत्वयि तदा ॥

दीकिमितिसर्वमत्यजत्।परमेश्वरोपिशरणागतायसुखंददातीत्यर्थवादएवेतिनिंदेयुस्ततस्तत्कृतानिं
दायादुःसहत्वात् हेस्वजनरतहेनाथधूर्तायथायेनप्रकारेणत्वामाउभावावांनर्निदंतुतथाद्येदानींम
मदुःखंनिरसितुंदूरीकर्तुंत्वंप्रभवसमर्थोभवेत्यर्थः । धूर्ताअपियथाविश्वासमीयुस्तथात्वमाचरेतिभा
वः ॥ ४० ॥ अधुनाभगवतईश्वरत्वंस्वस्मिन्प्रार्थयति ॥ यदीति ॥ हेनाथश्रुत्यावेदेनविहिताच

 र्यायस्यतं । नरेषुवरंश्रेष्ठं । भवाब्धेःसंसारसागराद्यद्युद्धर्त्तोद्धरणशीलस्त्वमसि । तदात्वयिकथमपि 
चित्रमाश्चर्यंनभवति । तस्यवेदविहितचर्य्यत्वेनतरणयोग्यत्वात् । हेभगवन्विरुद्धावेदनिषिद्धा
॥१४॥ चर्यायस्यताद्दृशंमांयदितुभवाब्धेःपारमजयेस्त्वंगमयेस्तदातुहेनाथतेतवेशत्वंसमर्थत्वंजगतिसततं
गणये । अपिचेत्सुदुराचारोभजतेमामनन्यभाक् ॥ साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः ॥
॥ १ ॥ क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति ॥ कौन्तयप्रतिजानीहिनमेभक्तःप्रणश्यती

विरुद्धाचर्यं मां यदि तु भगवन्पारमजयेस्तदात्वीशत्वं ते
जगति सततन्नाथ गणये ॥ ४१ ॥ भवाब्धौ मज्जन्तं जनिमृ-
तिजले दुःखमकरे षडूर्मिव्याप्ते मां यदि झटिति नाथ त्वम-
धुना ॥ न तस्मादुद्धर्तुं स्वभजनसुनावं दृढतरां समारोप्य
स्वामिन्प्रभवसि तदा ते क्व च दया ॥ ४२ ॥

त्यादिनायदुक्तंदुराचारतारणसमर्थत्वंतज्जगतिनास्तिकसभायांनिरंतरमहंप्रतिपादयेयमित्यर्थः ॥
॥ ४१ ॥ इदानीमस्मिन्संसारसागरेऽत्यन्तदुःखितेत्वच्छरणेमयियदितेदयान । तर्ह्यन्यस्मिन्कुत्र
साभविष्यतीत्यत्युद्विग्नःप्रार्थयति ॥ भवाब्धाविति ॥ हेनाथाधुनाजनिमृतिरूपंजलंयस्मिन् । ॥१४॥
तथात्रिविधदुःखानिमकरायस्मिन् । क्षुधापिपासाशोकमोहजरामरणलक्षणाऊर्मयस्ताभिर्व्याप्तेभ
वाब्धौमज्जन्तंमांस्वस्य भजनमेवसुनौःशोभनातरीस्तांदृढतरांसमारोप्य तदुपरिस्थापयित्वा त

स्माद्भवोदधेरुद्धर्तुंझटितियदित्वंनप्रभवस्युद्यतोभवसि । तदाहेनाथ तेक्कचकस्मिन्पुनर्दयास्यादि तियोजना । त्वच्छरणेषुमदन्यस्यमादृशस्यदुःखिनोऽभावान्मय्यवश्यंदयाकर्तव्येतिभावः ॥४२॥ इदानींस्वापराधंदर्शयित्वातं क्षामयन्प्रार्थयति ॥ त्वयीति ॥ हेस्वामिन्शुद्धेसच्चिदानंदरूपेइह साक्षादपरोक्षेत्वयिइदमसज्जडदुःखात्मकंजगद्वितथंमिथ्यैवमयारोप्यारोपितं त्वयिनासीदस्तिभ

त्वयि स्वामिन् शुद्धे जगदिदमिहारोपि वितथं फलं तस्याशुद्धं जनिमृतिमयं नाथ वगतम् ॥ इदानीं मे मंतून्स्वजनकृपया त्वं क्षम विभो श्रितोऽहं त्वां नाथं त्वमसि परिपालः श्रितनृणाम् ॥ ४३ ॥ मया बाल्ये स्वामिन्विगतमतिना नैव चरितं हितं क्रीडासक्तेस्तदनु युवतीध्यानपरमः ॥ युवा नैवास्मार्षं तव हितकरं पादमधुना जराव्यासोऽशक्तोऽवनतरत मां स्वं स्वकृपया ॥ ४४ ॥

विष्यतीतिसर्वदातस्याभावात् । तस्यमिथ्यारोपस्यजनिमृतिमयमतएवाशुद्धंयत्फलंतदपिहेना थमयावगतंप्राप्तम् । इदानींहेविभोस्वस्यजनेषुभक्तेषुयाकृपातयामेमन्तूनपराधांस्त्वंक्षमक्षमयस्व । यस्मात्त्वांनाथमहंश्रितआश्रितस्त्वंचश्रितनृणांस्वाश्रितजनानांपरितःपालयतीतिपरिपालस्तादृ शस्त्वमसि । अतोमामपिस्वाश्रितंत्वंपालयेत्यर्थः ॥ ४३ ॥ कदापिमयास्वहितंनानुष्ठितमतः

स्वशरणागतंमांपाहीतिप्रार्थयति ॥ मयेति ॥ हेस्वामिन्विगतानष्टामतिर्यस्यतेनमयाबाल्येबा
ल्यावस्थायांहितंसुखसाधनंनैवचरितमनुष्ठितंक्रीडासक्तेःलीलायामासक्तत्वात् । तदनुयुवायौव

नावस्थापन्नोऽतएवयुवत्याध्यानंपरमंसर्वोत्तमंप्रतीयमानंयस्यसोऽहंहितकरंतवपादंनैवास्मार्षस्मृत
वान् । अधुनाजरयान्यासोऽतएवहितानुष्ठानेऽशक्तोसमर्थोऽस्म्यतोनतेषुस्वभक्तेषुरतःप्रेमयुक्त
स्तत्संबोधनंहेऽवनतरतस्त्वंस्वकीयंमांशरणागतंस्वकृपयात्वमव । संसारदुःखात्पाहीत्यर्थः ॥ ४४ ॥

अहं मातुः कुक्षौ मलकृमिरिवात्यंतविकलः स्मरन्योनीर्नाना-
ऽकृषि भगवतो ध्यानममलं ॥ प्रतिज्ञा तत्राभूद्विषयभजनं नो
कथमपि करिष्ये भो नाथ प्रतिदिनमहं त्वामभिभजे ॥ ४५ ॥
प्रतिज्ञां कृत्वैवं बहिरपि ततो दुःखमगमं वराकं मां माया
तव तिमिरदृष्टिं विदधती ॥

अथाधुनाजनन्युदरस्थंस्ववृत्तंवर्णयंस्तत्रजातांस्वप्रतिज्ञामिदानींदूरीकृतवतींस्वमायांभगवन्वारयि
त्वाममहितैषीभवेतिप्रार्थयति ॥ अहंमातुरितिद्वाभ्याम् ॥ मातुःकुक्षावुदरेमलस्यकृमिरिवात्य
न्तविकलोदुःखितस्तथानानायोनीःपूर्वजन्मानिस्मरन्भगवतोऽमलंध्यानमहमकृषिकृतवान् । तत्र ॥१५॥
मातृकुक्षौममप्रतिज्ञाऽभूत् । भोनाथकथमपिविषयाणांभजनंसेवनमहंनोकरिष्ये । त्वांचप्रतिदि
नमभितःसर्वतोभजइति ॥ ४५ ॥ प्रतिज्ञामिति ॥ एवंप्रतिज्ञांकृत्वाततःकुक्षेर्बहिरिदानीमप्यहं

दुःखमगमंप्रापम् । तर्हित्वयातुतत्रममध्यानपूर्विकाप्रतिज्ञाकारि । तत्कथमिदानींतद्दुःखमितित त्राह ॥ हेनाथतवमायावराकंदुर्बलमतएवतिमिरातत्कृतावरणेनान्धादृष्टिर्यस्यैतादृशंमांविदधती कुर्वतीप्रसभंबलात्कारेणमेकुक्षिस्थांप्रतिज्ञामभिभूयतिरस्कृत्यमामज्ञंमूढमकरोत् । यस्मात्तवमायैव वराकस्यमेदुर्दशामकरोत्तत्तस्मात्त्वमेनांस्वमायांसंवार्य्यसम्यग्वारणंकृत्वाऽधुनाममत्वच्छरणस्य हि तमिच्छतीतितच्छीलइतिहितैष्येऽधिभवेत्यर्थः ॥ ४६ ॥ त्वयिममभेदस्यमायाकृतत्वान्तांनिवा

प्रतिज्ञां मे नाथ प्रसभमभिभूयाज्ञमकरोत् तदेनां संवार्य्यैधि च मम हितैषी त्वमधुना ॥ ४६ ॥ अहं ब्रह्मानंदस्त्वमपि च तदाख्यः सुविदितस्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुति-दृशा ॥ तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं स्व-मायां संवार्य्य प्रभव मम भेदं निरसितुम् ॥ ४७ ॥

र्य्यतत्कृतंभेदंदूरीकुर्विंतिप्रार्थयति ॥ अहमिति ॥ भोभगवन्नहंब्रह्मैवानंदोत्रब्रह्मानन्दः एतन्नामल क्षितःसच्चिदानंदरूपस्त्वमपिचतदाख्यः । सात्रब्रह्मानंदरूपा आख्यानामतदुपलक्षितंसच्चिदानंद रूपंलक्षणंयस्यसतदाख्योविदितश्वेदशास्त्रविद्वत्प्रसिद्धस्ततस्तस्मादावयोरेकलक्षणलक्षितत्वात्श्रु तिदृशातत्त्वमस्यहंब्रह्मास्म्ययमात्माब्रह्मप्रज्ञानंब्रह्मेत्यादिवेददृष्ट्याभवत्तस्त्वत्तःसकाशादहंकथम पिविनाऽविद्यांकेनापिवास्तवप्रकारेणभिन्नोनोनास्मि । तथाचत्वयिममभेदस्याविद्यकत्वेचत्व

 यिममविभेदस्यजननींस्वमायामिदानींसंवार्य्यस्वस्मिन्ममभेदंनिरसितुंदूरीकर्तुंप्रभव तत्त्वज्ञानंद 
त्वाज्ज्ञाननिवृत्त्याभेदनिरासायसमर्थो भवेत्यर्थः ॥ ४७ ॥ अधुनाज्ञानजनकांदैवींसम्पदंभगवतः
॥१६॥ प्रार्थयति ॥ स्मरामर्षाद्यैरिति ॥ स्मरःकामः अमर्षःक्रोधस्तावाद्यौसुख्यौयेषुदंभलोभादिषुतैरा
सुरसंपद्रूपैर्मेशमदमसुखादैवसंपल्लक्षणाहेनाथविहतानाशिता । अतोदैवीसंपत्कुधियोमेचितिंच
यन्नंनह्यवाप्नोति । तांदैवींसम्पदंविनाशांतिर्मेकुतः स्यादितिवेदेप्रविदितंप्रसिद्धम् । शान्तोदांत

स्मरामर्षाद्यैर्मे शमदमसुखा नाथ विहता अतो दैवीसंपन्न
हि चितिमवाप्नोति कुधियः ॥ विना तां शांतिः स्यात्कुत इति
तु वेदे प्रविदितं ततो दैवीन्तां मे वितर कृपया मोक्षजननीम्
॥ ४८ ॥ स्वमातुः पित्रादेस्त्यजनमकृषि त्वद्धृदुमुदे न चेत्सा
स्यात् स्वामिन्सततमभिनिन्देयुरखिलाः ॥

उपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानंपश्येदित्यादिश्रुतेः । दैवीसंपद्विमोक्षायनिबं
धायासुरीमतेत्यादिस्मृतेश्च । यतोदैवींसंपदंविनाशांतिर्नास्तिततस्तस्मान्मोक्षजननींतांदैवींमे
मह्यंकृपयावितरदेहीत्यर्थः ॥ ४८ ॥ हेभगवन्त्वत्प्रीत्यर्थंमातृपित्रादेर्मयात्यजनंकृतं । ततोऽपिय ॥१६॥
दिमयित्वंनप्रसीदेस्तदातेप्यावांनिंदेयुरतस्त्वंप्रसन्नोभवेतिप्रार्थयति ॥ स्वमातुरिति ॥ हेस्वामिन्
त्वद्धृदुमुदेतवात्यन्तप्रीत्यर्थंस्वमातुःपित्रादेश्चत्यजनमहमकृषिकृतवानस्मिचेद्यदिसातेप्रीतिर्नस्या

त्तदाऽखिलामातृपित्रादयोनौसततमभिनिन्देयुः । अस्मान्परित्यज्यपरमेश्वरपरेत्वयितेनकि मुपकृतमितिअतस्तन्निन्दायाडुःसहत्वात्कथमपिदुःखितत्वादिप्रकारेणत्वयिनिहितंसमर्पितंसर्वंये नतस्मिन्मयितेदयालोःप्रीतिःस्यात् हेविष्णोतेप्रसादान्ममगतिःसंसाराडुद्धारोऽतोमदुद्धारात्तेयश इत्युभेभवतइत्यर्थः ॥ ४९ ॥ इदानींमायाकृतमपराधमीश्वरायनिवेदयन्नीश्वरपादशरणंप्रार्थयति॥

अतस्तेप्रीतिःस्यान्मयि निहितसर्वे कथमपि प्रसादात्ते विष्णो
मम गतिरतस्ते यश इति ॥४९॥ मया त्यक्तं सर्वं कथमपि भवे-
त्स्वात्मनि मतिस्त्वदीयामाया मां प्रतितु विपरीतं कृतवती ॥
ततोऽहं किं कुर्यां न हि मम मतिः क्वाऽपि चरति दयां कृत्वा नाथ
स्वपदशरणं देहि शिवदम् ॥५०॥ भयात्तेऽग्निःस्वामिंस्तपति च-
लतीनोऽपि भयतस्तथेंद्रो भीतिस्ते किरति च जलं वाति पवनः॥

मयेति ॥ हेनाथकथमपिकेनापिप्रकारेणस्वात्मनित्वयिममतिर्भवेदित्यभिप्रेत्यमयामातृपितृ गृहादिकंसर्वंत्यक्तम् । यात्वदीयामायासातुमांप्रतिविपरीतंकृतवती आत्मज्ञानंतुदूरेप्रत्युताधिक संसारेतयानिपातितोऽस्मि । तस्मादहंकिंकुर्यां । हियस्मान्ममतिर्बुद्धिःक्वापिकस्मिंश्चिदप्यु पायेनचरतिगच्छति । हेनाथदयांकृत्वामेशिवदंस्वपदशरणंत्वंदेहीतियोजना ॥ ५० ॥ अधुना भयात्तस्याग्निस्तपति भयात्तपतिसूर्यःभयादिंद्रश्चवायुश्चमृत्युर्धावतिपंचमइत्यादिश्रुत्युक्तंभगवदे

10

श्चर्यंप्रतिपादयन्भयशून्यंतत्पदंप्रार्थयति ॥ भयादिति ॥ हेस्वामिंस्तेभयादग्निस्तपतिदाह्यंदह
तितथेनःसूर्योपितेभीतेश्चलत्युदयाचलादस्ताचलंगच्छतितथेन्द्रस्तेभीतेर्जलंकिरतिवर्षति पवनो
॥१७॥ वायुरपितेभीतेर्वातिगच्छतियमःकालोऽपितेऽधिकं भयमित्वाप्राप्येहमर्त्यलोकेसरतिगच्छतिततःस
र्वस्यतेभीतिविषयत्वात् हेस्वामिन्नधिकंसर्वोत्तममतएवभीतेःशून्यंस्वपदंस्वस्थानंस्वरूपंवाकृपया
शरणागतायमह्यंदेहीतियोजना ॥५१॥ अधुनातत्त्वज्ञानस्वरूपंकथयंस्तत्प्रार्थयति ॥ अहमिति ॥

यमोऽपि स्वामिंस्ते भयमधिकमित्वेह सरति ततोभीतेःशून्यं
स्वपदमधिकं देहि कृपया ॥ ५१ ॥ अहं ज्योतिर्नित्यो गगन-
मिव सूक्ष्मः सुखमयः श्रुतेःसिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि
परतः ॥ इति ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्व-
ज्ञानंमयि विघटयेस्त्वं हि कृपया ॥ ५२ ॥

अहंज्योतिश्चिद्रूपोनित्यस्त्रिकालाबाध्योगगनमिवसूक्ष्मोव्यापकःसुखमयः आनंदरूपःश्रुतेःसिद्धो
वेदांतवेद्योऽद्वैतःसत्यंज्ञानमनन्तंब्रह्म आनन्दोब्रह्मेतिव्यजानात् एकमेवाद्वितीयमित्यादिश्रुतेः
इत्येवंप्रत्यगभिन्नेतत्त्वेपरमात्मनिज्ञातेसतिसंसृतेर्द्वैतस्यलयाद्बाधात्परःपरमात्मैवभवति ब्रह्मविद्ब्र ॥१७॥
ह्मैवभवति तरतिशोकमात्मवित् ज्ञानीत्वात्मैवमेमतं ज्ञानवान्मांप्रपद्यतेइत्यादिश्रुतिस्मृतिभ्यः
अतःज्ञानस्यसंसारनिवृत्तिद्वारातवपदप्राप्तिहेतुत्वात्तादृशंतत्त्वज्ञानंकृपयात्वंमयिविघटयेःसंपादय।

भक्त्यामामभिजानाति भक्तिमान्मांप्रपद्यतइतिभक्तेरपितवपदप्राप्तिहेतुत्वात्तामपिमयिविघटये रितिहिनाध्वनितम् ॥ ५२ ॥ अथेश्वरस्यस्वबुद्धौप्रादुर्भावंप्रार्थयंस्तत्सिद्धंकालात्स्वरक्षणंचप्रार्थयति ॥ अयइति ॥ हेऽन्तर्यामिन्हेविभोमममनसित्वंसाक्षात्प्रत्यक्षोभवेहत्वयिस्वामिनिविद्यमानेऽप्यमुदग्रःक्रूरःकालःप्रतिदिनमसून्मेप्राणान्प्रकर्षेणहरतिनाशयति । तर्हिमदन्यंकंचिच्छरणंत्वं

अयेंऽतर्यामिंस्त्वं मम मनसि साक्षाद्भव विभो उदग्रः कालो-
ऽयं प्रतिदिनमिहाऽसून्प्रहरति ॥ त्वदन्यं सारांगं नहि शरण-
मीक्षे हितकरं ततःकालान्माऽव स्वपदसविधे प्राप्य कृपया
॥ ५३ ॥ न यज्ञैर्दानैर्वा न च परतपोभिस्तव मतिर्व्रताद्यास्ती-
र्थाद्यास्त्वदवगतिदाः संति न विभो ॥ अहं भक्त्याऽद्वैतोऽव-
गतिविषयोऽस्मीति वचनादतो भक्तिं तां मे वितर कृपया
दीनसुदय ॥ ५४ ॥

गच्छेतितत्राह ॥ त्वदन्यंसारांगंबलिष्ठंहितकरंकल्याणकारिणंहियस्मादहंनेक्षेनपश्यामि । ततस्तस्मात्कृपयास्वपदस्ययत्सविधंसामीप्यंतत्रमांप्राप्यकालादवरक्षेत्यर्थः ॥ ५३ ॥ यज्ञदानादिकर्मापेक्षयाभक्तेरुत्तमत्वात्तांप्रार्थयति ॥ नयज्ञैरिति ॥ हेविभोयज्ञैर्ज्योतिष्टोमादिभिर्दानैस्तुलापुरुषादिभिश्चतवमतिर्ज्ञानंनसंभवति । चपुनः परतपोभिर्हिंमादिकृतौशीतोष्णादिसहनलक्षणतप

स्याभिस्तेमतिर्नभवति । नकर्मणानप्रजयानधनेनत्यागेनैके ऽमृतत्वमानशुरित्यादिश्रुतेः । व्रतं कृच्छ्रचांद्रायणादिआद्यंमुख्यंयेषुवेदाध्ययनदेवजपादिषुतेव्रताद्यास्तथातीर्थंपुष्करादिआद्यंमुख्यं
॥१८॥ येषुपुण्यक्षेत्रनिवासादिषुतेतीर्थाद्यास्त्वदवगतिदास्तवज्ञानजनकानसंति । तदुक्तंभगवता । नाहंवेदैर्नतपसानदानेननचेज्यया ॥ शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथेति । कुतस्तेममज्ञानजनकानेति तत्राह ॥ अद्वैतोऽहंपुरुषस्यभक्त्यापरानुरक्त्यैवावगतिज्ञानंतद्विषयोस्मिभवामीतिते

पृथा त्वां हेस्वामिन्कथमपि विपत्तिं त्वयि हिता ययाचे यत्राहो मिलसि भगवांस्त्वं सुखनिधिः ॥ अतोऽहं जाने त्वां स्वजनविपदं त्वौषधिधिया ददानः स्मृत्यर्थं भृशमसि सदा भक्तहितवान् ॥ ५५ ॥

वचनात् । तववचनंतु । भक्त्यात्वनन्ययाशक्यअहमेवंविधोऽर्जुन ॥ ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंच परंतपेति । भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतइति चातोभक्तेरेवत्वदवगतिहेतुत्वात्हे दीनेषुसुदयदयालोतांभक्तिंमेमह्यंकृपयावितरदेहीतियोजना ॥ ५४ ॥ भगवत्स्मृतिप्रतिबंधकारीमदोमाभूदितिभक्तास्त्वांविपदंयाचंते । त्वमपितेभ्यःस्वस्मृत्यर्थंतामेवददासीतिभक्तहितेप्रीत्याह ॥ पृथेति ॥ हेस्वामिंस्त्वयिहितंप्रेमयस्याःसापृथाकुंतीत्वांत्वत्तोविपत्तिंययाचे । यत्रयस्यांविपत्तावहोआश्चर्यंसुखनिधिर्भगवांस्त्वंमिलसि । अतोभक्तविपत्तेस्तवप्राप्तिहेतुत्वात्स्वस्ययेजनाभ ॥१८॥

क्तास्तेभ्यःस्वस्मृत्यर्थमौषधिबुद्ध्याविपदंददानस्त्वंभृशमत्यंतंसदाभक्तेषुहितवानसीतित्वांजाने।
तदुक्तंकुन्त्या।विपदःसन्तुनःशश्वत्तत्रतत्रजगद्गुरो।।भवतोदर्शनंयत्स्यादपुनर्भवदर्शनमिति ॥५५॥
अधुनामुक्तोपसृप्यंपरमात्मनःस्वरूपंवर्णयन् स्वशरणत्वेनतंप्रार्थयति ॥ पुरासृष्टेरित्यादिपंचभिः॥
योऽनिमिषोनिर्विकल्पःपरमात्मास्वयंस्वेनात्मनासृष्टेर्जगदुत्पत्तेःपुराआदावेकोऽद्वितीयआसीत् ।
तर्हिसावयवोनेत्याह ॥ अकलःनसंतिकलाअवयवायस्यसइत्यर्थः । सदेवसौम्येदमग्रआसीदेक
मेवाद्वितीयमित्यादिश्रुतेः । नतेजोनध्वांततेजोध्वांतशब्दाभ्यांप्रकाशाप्रकाशात्मकंसर्वंजगल्ल

पुरा सृष्टेरेकः स्वयमकल आसीदनिमिषो न तेजो न ध्वांतं
गुणकृतकलाख्यादिरहितः॥ स्वशक्तिं मायाख्यामखिलजनि-
माश्रित्य सहसा ससर्जेदं यस्तं सततममलं यामि शरणम् ॥ ५६ ॥

क्ष्यते । तत्किमपिनासीदित्यर्थः । ननुतत्रजगदुत्पादनसामर्थ्यमासीत्तस्यनामचेतिकथमुच्यते
किंचिदपिनासीदितितत्राह ॥ गुणकृतकलाख्यादिरहितइति ॥ गुणाःसत्त्वादयस्तैःकृतायाकला
जगदुत्पत्त्यादिसामर्थ्यविशेषाः आख्यानामानिचादिनारूपाणिचतैरहितः। मायाख्यांस्वशक्ति
मखिलजनिंसर्वजगदुत्पादयित्रीमाश्रित्येदंजगत्सहसाजीवःस्वप्नमिवससर्जोत्पादितवांस्तममलम्
वस्तुतोऽविद्यातत्कार्यरहितत्वान्निर्मलमहंसततंनिरंतरंशरणंयामि। संसारभयनिवृत्त्यर्थंतदेकप्रवणो
ऽस्मि । उपाधिपरित्यागेनतदेकरूपताम्प्राप्तोस्मीतिवार्थः ॥ ५६ ॥

20

यदर्थमिति ॥असुःप्राणःधनादिसुखसाधनंचसर्वमेतत्यदर्थंयस्माइदंयस्यात्मनःकृतेवैप्रसिद्धंप्रियंप्रे
मास्पदंप्रभवति । स्वयंतुयोऽन्यस्माअयमन्यार्थः अन्येषांपुत्रभार्याधनादीनांकृतेप्रियोनभवतिही
॥१९॥ तिलोकेप्रसिद्धं वेदेचप्रविदितम् ॥ तथाचश्रुतिः ॥ नारेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुका
मायसर्वंप्रियंभवतीति । सर्वेषांजनिमृतिमतांसआत्मावेदगदितस्तथाचवेदः । सतआत्मान्तर्या

यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति स्वयं नान्यार्थोहि प्रिय इति च वेदे प्रविदितम् ॥ स आत्मा सर्वेषां जनिमृतिमतां वेदगदितस्ततोऽहं तं वेद्यं सततममलं यामि शरणम् ॥ ५७ ॥

यतो जातं विश्वं स्थितिरपि च यत्रास्ति च लयः स्थितो यो जीवानां कृतफलविभागं हि कुरुते ॥ स्वतो नासौ किंचिद्विकृतिरहितश्चिद्घनवपुः करोत्यात्मा शांतस्तममलमहं यामि शरणम् ॥ ५८ ॥

म्यमृतइति । ततःसर्वेषामात्मत्वात्तंवेद्यंवेदितुंयोग्यममलमहंशरणंयामीत्युक्तार्थः ॥ ५७ ॥ यत
इति ॥ यतःपरमात्मनइदंविश्वंसर्वंजातं । यत्रात्मनिस्थितिरपिविश्वस्यलयश्चयत्रास्ति । यतो ॥१९॥
वाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयन्त्यभिसंविशंतीत्यादिश्रुतेः । यःपरमात्मा स्थि
तोस्थित्यवस्थायांजीवानांकृतानियानिकर्माणितेषांफलविभागंयस्यकर्मणोयस्मिन्देशेयत्कालेय

न्निमित्तेनफलंभोक्तव्यंतस्यविभागंहिप्रसिद्धंकुरुते । फलमतउपपत्तेरितिन्यायात् असावात्मावि
कृतिरहितोऽतश्चिद्घनवपुश्चिदेकमूर्त्तिःस्वतोमायारहितनिर्विकारस्वरूपस्वभावात् सकिंचिदपिन
करोति । यतःशान्तोनिर्विकल्पस्वरूपस्तदुक्तंभगवता । नकर्तृत्वंनकर्माणिलोकस्यसृजतिप्रभुः॥
नकर्मफलसंयोगंस्वभावस्तुप्रवर्ततइति । तममलमहंशरणंयामीत्युक्तार्थः ॥ ५८ ॥ शिवाद्याइ
ति ॥ स्वरसतःस्वभावात्अचलःकूटस्थोनिजःस्वकीयोमहिमायस्यतस्मिन् । यत्रसच्चिदानंदरूपे

शिवाद्याः सर्वज्ञा निखिलमुनयो ब्रह्मरसिका विराजंते यत्रा-
चलनिजमहिम्नि स्वरसतः ॥ परं तं भूमानं समरसघनं ज्यो-
तिरभयं सदात्मानं देवं सततममलं यामि शरणम् ॥ ५९ ॥
न दृश्यं नो द्रष्टा न च करणसाध्यं न विमतं न जीवो नोपा-
धिर्न च जनिमृती नैव च जरा ॥

ब्रह्मणिसर्वंजानंतीतेसर्वज्ञाःशिवआद्योमुख्योयेषुतेनिखिलमुनयोविशेषेणराजंतेप्रकाशंतेस्थिता
भवंतीत्यर्थः । यतोब्रह्मरसिकाब्रह्मणिरसआनंदोविद्यतेयेषांतेतथा । तंकार्यकरणसंघातात्परंभूमा
नंव्यापनशीलंसमरसघनमानन्दैकमूर्तिंज्योतिरभयम् । सर्वस्यप्रकाशकत्वेनासंगत्वाद्भयशून्यंस
दात्मानंसर्वानुगतःसन्नात्मास्वरूपंयस्यतंदेवंद्योतनात्मकममलंसततंशरणंयामीतियोजना॥५९॥
॥ नदृश्यमिति ॥ समुदितेनित्यंप्रकाशमानेयत्रचिदानंदेब्रह्मणि । दृश्यंघटादि । द्रष्टादर्शनक्रि

याश्रयः । करणेनचक्षुषासाध्यंदर्शनमेतत्त्रयंवस्तुतोनास्ति । यत्रविमतंभावाभावरूपत्वेनविवा
दास्पदीभूतमज्ञानंसूर्य्येतमइवयत्रनास्ति । यत्रजीवोंतःकरणावच्छिन्नचेतनःउपाधिरंतःकरणंतौन
॥२०॥ स्तः । यत्रजनिमृतीनस्तः । जराचनैवास्ति । तेषांस्थूलशरीरधर्मत्वात् । यत्रसृष्टिःसृज्यतेसर्जनं
वासृष्टिःसृज्यमानंसर्जनक्रियावानास्तीत्यर्थः । स्रष्टासर्जनक्रियाश्रयः । यत्रसुकृतपापेउभेनभव
तस्तयोर्विज्ञानंयज्ञंतनुतेइतिश्रुत्याविज्ञानपदवाच्यबुद्धिधर्मत्वात् । सपरतरोहिनिश्चितंमेशरणमस्तु

न सृष्टिर्नो स्रष्टा न च सुकृतपापे समुदिते चिदानन्दे यत्रास्तु
स हि शरणं मे परतरः ॥ ६० ॥ दयालो हेनाथास्मदनुचरितं
नैव मनुतां व्रतं यत्ते शास्त्रे तदनुसरणं त्वं कुरु विभो ॥ तवाहं
हे नाथेति वदति य एवं त्वयि मना भवाब्धेस्तं पारं कुरुष
इति तेंऽग व्रतमिदं ॥ ६१ ॥

भवत्वित्यर्थः ॥ ६० ॥ अथस्वव्रतमनुस्मृत्यास्मदनुचरितंशुभाशुभंनैवमन्तव्यमितिप्रार्थयति ॥
दयालोइति ॥ हेनाथास्मदनुचरितंशुभाशुभंभवान्नैवमनुतांनावलोकयहेविभोशास्त्रेयत्तेव्रतंत
स्यानुसरणंत्वंकुरुतंभजेत्यर्थः । तस्यव्रतमेवदर्शयति । तवेत्यादि । हेनाथाहंतवेत्येवंत्वयिमनाः ॥२०॥
पुमान्योवदतितंभवाब्धेःपारंत्वंकुरुषेइतीदंहेंगप्रियतेव्रतमस्ति । तदुक्तं । सकृदेकप्रपन्नायतवास्मी
तिचयाचते ॥ अभयंसर्वदातस्मैददामीतिव्रतंममेति ॥ ६१ ॥

इदानीमैहिकपारलौकिकसुखसाधनशून्योऽहंतेशरणंगतोऽस्मि । त्वंतुस्वव्रतमनुसृत्यमांपाहीति प्रार्थयति ॥ पितृभ्यामितिदशकेन ॥ हेस्वामिन्माताचपिताचपितरौताभ्यांसहमेसंबंधस्यरचनानि र्मितिर्नचसंभवतिदाराश्चस्त्रियःपुत्राद्याश्चतैःसहापिसंबंधकरणंनास्ति । नृपाश्चधनाढ्याश्चतैःसमं सहापिमेसंबंधरचनान तथादेवाइंद्रादयआद्यामुख्यायेषुयक्षपिशाचादिषुतैःसहापिममसंबंधरचना नास्ति । तत्तस्मात्तवचरणस्यसंबंधःशरणंयस्यसोऽहंत्वांभजेविश्वस्यसेवे । हेनाथत्वमपिभवदीयं

पितृभ्यां मे स्वामिन्नच भवति संबंधरचना नदारापुत्राद्यैर्न
हि नृपधनाढ्यैः सममपि ॥ तथा देवाद्यैस्तत्तव चरणसंबंधश-
रणो भजेऽहंत्वां नाथ त्वमपि भवदीयं व्रतमवेः ॥ ६२ ॥
बलं सम्पत्तेर्मे न भवति न बन्धोर्बलमपि तपस्यायाश्चैवं क्र-
तुयजनदानस्य न बलम् ॥

पूर्वोक्तंस्वकीयंव्रतमवेःकृपयापालयाभयंमेदेहीतिभावः ॥ ६२ ॥ बलमिति ॥ संपत्तेरैश्वर्यस्यमे बलंनभवति । बंधोःसंबंधिनोऽपिबलंनैवेत्यैहिकसुखसाधनसंपत्तिर्नास्तीत्यर्थः । एवंतपस्यायात्र लंनास्ति । क्रतुर्यज्ञःयजनंदेवपूजनंदानंसुपात्रेद्रव्यत्यागस्तेषां समाहारेतत्तस्यापिमेबलंनास्तीत्ये वंपारलौकिकसुखसाधनमपिनास्तीत्यर्थः । विवेकादेर्ज्ञानसाधनचतुष्टयस्यापिहेब्रह्मन्मेबलंनहि येनतत्त्वज्ञानद्वारासुखंलभेयम् । अथापि एवंसुखसाधनसम्पत्यभावेपित्वमरणंशरणंयस्यसोऽहंहे

नाथत्वांभजेसेवे त्वमपिभवदीयंव्रतमवेरित्युक्तार्थःपादः ॥ ६३ ॥ नमैत्रीति ॥ हेस्वामिन्सु खिबहुलदुःखप्रभृतिषुसुखीचबहुलंदुःखंयेषुतेबहुलदुःखाःप्रभृतयः आदिभूतायेषांपुण्यापुण्यकारि णांतेवहुलदुःखप्रभृतयश्चतेषुसुखिविषयिकामैत्रीसौहार्दंमेहृदिकथमपिनास्ति । तथादुःखवहुलवि षयिकाकरुणामेहृदिनास्ति । तथापुण्यकारिविषयिकामुदामुदिताहर्षः । तथापुण्यकारिविषयि कोपेक्षौदासीन्यंचतेउभेममहृदिनस्तस्तथाचमैत्र्यादीनामभावान्मेस्वान्तेमनसि प्रसादःप्रसन्नता

विवेकादेर्ब्रह्मन्न हि बलमथापि त्वद्रणो भजेहं त्वां नाथ त्व-
मपि भवदीयं व्रतमवेः ॥ ६३ ॥ न मैत्री मे स्वामिन् त्हृदि च
करुणा नो कथमपि मुदोपेक्षे न स्तःसुखिबहुलदुःखप्रभृतिषु॥
प्रसादो मे स्वान्ते भवति च कुतोऽतः श्रितपदो भजेहं त्वां
नाथ त्वमपि भवदीयं व्रतमवेः ॥ ६४ ॥

कुतःकारणाद्भवति । नकुतोपिभविष्यंतीत्यर्थः । तदुक्तंपतंजलिना । मैत्रीकरुणामुदितोपेक्षा णांसुखदुःखपुण्यापुण्यविषयाणांभावनातश्चित्तप्रसादनमिति । अतश्चित्तप्रसादसाधनानांमैत्र्या दीनामभावात्श्रितमाश्रितंपदंतवचरणंयेनसोहंभजेइत्युक्तार्थःपादः । तदुक्तं । मैत्रीसमेषुनचमे स्तिकदापिनाथदीनेतथानकरुणामुदिताचपुण्ये ॥ पापेनुपेक्षणवतोममसुत्कथंस्यात्तस्मात्त्वमद्य शरणंममदीनबन्धोइति ॥ ६४ ॥

॥ नधर्मेति ॥ हेनाथममधर्मानुष्ठानंनेतिमनसःशुद्धिर्नभवतिनभविष्यति । विवेकाद्यासंपन्नेति ज्ञानममलंनिर्मलंनभवेन्नस्यात् । वाऽथवान्यउपासनादिलक्षणआलम्बआश्रयोमेनास्तितदपि तथापिभवतस्तवश्रितंपदंयेनसोहंभजेइत्युक्तार्थः । तदुक्तं । यज्ञोनमेस्तिहुतिदानदयादियुक्तो ज्ञानस्यसाधनगणोनविवेकमुख्यः ॥ ज्ञानंकसाधनगणेनविनाक्वमोक्षस्तस्मात्त्वमद्यशरणंममदीनबन्धोइति ॥ ६५ ॥ शरीरेति ॥ हेआत्मन्शरीरादीनामध्यासादहंस्थूलोऽहंकाणोऽहंक्षुधापि

न धर्मानुष्ठानं न च भवति शुद्धिर्हि मनसो विवेकाद्या संपन्न च मम भवेज्ज्ञानममलम् ॥ न वालंबोऽन्यो मे तदपि भवतस्संश्रितपदो भजेहं० ॥ ६५ ॥ शरीराद्यध्यासान्मयि भवति दुःखं दुरवधि निरासो ह्यस्यात्मन्न हि सुकर आत्मानवगतेः ॥ यतो व्यक्तज्ञानं दुरधिगममाह प्रभुरतो भजेहं० ॥ ६६ ॥

पासावानहंसंकल्पवानहमध्यवसायवानित्यात्मनिमिथ्यारोपान्मयिदुःखंजन्ममरणादिसंसारलक्षणंदुरवधिदुःसाध्योऽवधिरंतोयस्यतद्दुरवधिभवतिभविष्यति । हियस्मादध्यासस्यनिरासोहिप्रसिद्धंसुकरःसुगमोनास्ति आत्मानवगतेःविवेकादिसाधनकलापंविनाऽव्यक्तात्मज्ञानाभावात् । यतः प्रभुःश्रीकृष्णोप्यव्यक्ताहिगतिर्दुःखंदेहवद्भिरवाप्यतेइत्यव्यक्तज्ञानंदुरधिगमंदुष्प्रापमाह । अतोऽव्यक्तात्मज्ञानस्याशायाअभावाद्भजेइत्युक्तार्थः ॥ ६६ ॥

 पितेति ॥ पिताहमस्यजगतोमाताधातापितामहइतिस्मृतेः । पितामाताचास्यजगतस्त्वमसि । 
जगदाधीयतेस्थीयतेऽस्मिन्नित्याधारः । निःशेषेणलीयतेऽस्मिन्निति निलयः । आधारश्चासौनि
 लयश्चेत्याधारनिलयःसोपित्वमसि । जगदुत्पत्तिस्थितिलयहेतुस्त्वमित्यर्थः ॥ अस्मिन्जगति
सत्तात्वदीयैवहियस्मादिहस्वकंसत्वंकिमपिनास्ति । यथायेनप्रकारेणेदंतत्त्वंज्ञायेततथातदुपायंमे
ऽतःकरणशुद्ध्यादिकंत्वंकुरुइतिहेतोःहेनाथत्वांभजेइत्युक्तार्थः ॥ ६७॥ नयोगाभ्यासइति ॥ हेवि

पिता त्वं माता त्वं त्वमसि जगदाधारनिलयस्त्वदीया सत्ता
ऽस्मिन्न हि किमपि सत्वं स्वकमिह॥यथेदं ज्ञायेत्त्वमिति तदु-
पायं कुरु तथा भजेहं० ॥६७॥ न योगाभ्यासो मे यमनियम-
मुख्यं न हि विभो न चोपासार्चे ते न हि भवति सेवा प्रियस-
ताम् ॥ विना वै सामग्रीं त्वयि न च मतिर्जायत इति भजेहं० ॥६८॥

भोयोगस्यचित्तवृत्तिनिरोधस्याभ्यासोमेनास्ति । यस्मादहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाः
शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानिनियमास्तेमुख्या आद्यायस्यासनादिसाधनजातस्यत
द्यमनियममुख्यंमेनास्ति ॥ चपुनस्तेउपासोपासनाऽर्चापूजनंचमेनास्ति । हियस्मात्प्रियंसत्पर ॥२२॥
मात्मतत्त्वंयेषांभगवद्भक्तानांतत्त्वविदांचतेषांमेसेवानभवति । सामग्रींतत्त्वज्ञानसाधनंविनात्वयि
प्रत्यगभिन्नेमतिस्तत्त्वज्ञानंनजायते ॥ इतिहेतोःहेनाथत्वांभजे ॥ तदुक्तं ॥ प्राणान्निरुद्ध्यवि

धिनानकृतोहियोगःपूजाकृतानहिकदापिमयात्वदीया ॥ सत्संगतिर्हिनचमेतवभक्तिहेतुस्तस्मात्त्वमद्यशरणंममदीनबंधोइति ॥ ६८ ॥ गुणानामिति ॥ हेविभोसत्वरजस्तमसांगुणानांसर्गःकार्यरूपःप्रपंचोमयात्वयिचितिमृषामिथ्यैवारोप्यारोपितं । यथाकाशेनैल्यमारोप्यतेतद्वत् । हेंगतेन मिथ्यैवारोपितेनगगनमिवत्वंमलिनोनभवस्यतस्तच्छुद्धंतेस्वरूपंमेहृदिसाक्षाद्भवतुइतिहेतोर्भजे ॥

गुणानां सर्गो वै त्वयि चिति मयारोपि च मृषा यथाकाशे
नैल्यं न च भवसि तेनांग मलिनः ॥ अतस्तच्छुद्धं मे त्वद्दि
भवतु साक्षादिति विभो भजेहं त्वां नाथ त्वमपि० ॥६९॥ स-
मानाः स्वर्य्याता हरति समयो मे तनुमपि हृता वागादीनां
वदनचलनाद्या व्यवहृतिः ॥ अहो तृष्णा वृद्धा मनसि भव-
तीति त्वदरणो भजेहं० ॥ ७० ॥

॥ ६९ ॥ समानाइति ॥ हेनाथसमानास्तुल्यायुष्काःस्वर्यातःपरलोकंगताः । अधुना समयःकालोमेतनुमपिहरति । यतोवागादीनामिंद्रियाणांवदनचलनाद्यायाव्यवहृतिर्व्यवहारःसाहृतानष्टाअहोआश्चर्यमेवमपिमनसितृष्णावृद्धाभवतीतिहेतोस्त्वमरणंशरणंयस्यसोहंभजे ॥ तदुक्तं ॥ गताःसमाइहविहायपरंवराकंमामद्यमेप्रतिहताव्यवहारशक्तिः ॥ देहंविनाशयतिकालइहातिलग्नस्तृष्णाततभवतिनाथततःश्रितोस्मीति ॥ ७० ॥

॥ पठन्तीति ॥ हेस्वामिन्नेकेतत्परतयाशास्त्रंव्याकरणादिपठन्ति । तदपरेनिगमंवेदंपठन्ति । अन्येवै निश्चयेनत्वांयजंतिपूजयंति । केचित्तवहितंत्वत्प्रीतयेपदार्थान्हिरण्यादीन् ददतिसुपात्रेषुविकरं
॥२३॥ ति । अहंतुहेहितकरसंसृतिभयात्तेशरणमगमंप्राप्तवान्अस्मि । हेविभोयथायेनप्रकारेणतेप्रीतिः स्याद्भवेत्तथात्वंकुरुममतुप्रार्थनैवकेवलेतिभावः ॥ ७१ ॥ इदानींजगदुद्धारायजलधितीरेवसतोज

पठन्त्येके शास्त्रं निगममपरे तत्परतया यजंत्यन्ये त्वां वै ददति च पदार्थांस्तव हितम् ॥ अहं तु स्वामिंस्ते शरणमगमं संश्रुतिभयात् यथा ते प्रीतिःस्याद्धितकर तथा त्वं कुरु विभो ॥७१॥ जगन्नाथ स्वामिन्जलनिधितटे त्वम्परिवसन्स्वभक्तानुद्धर्त्तुं त्वदनुशरणान्दर्शनपरान् ॥ कृपादृष्ट्याभीष्टं वितरसि वदान्योऽस्यतितरां ममाभीष्टं दातुं न पृथगपि यत्नस्तवभवेत् ॥७२॥

गन्नाथात्स्वाभीष्टंप्रार्थयति ॥ जगन्नाथेति ॥ हेस्वामिंस्त्वमनुशरणमाश्रमोयेषांतवदर्शनमेवपरं तात्पर्यविषयीभूतंयेषांतानेवंभूतान्स्वभक्तानुद्धर्तुंजलनिधेःसमुद्रस्यतीरेनीलाद्रौ त्वंपरिवसन्संस्ते ॥९६॥
भ्यः कृपादृष्ट्यात्वमभीष्टंवांछितंवितरसिददासियतोऽतितरामतिशयेनवदान्यउदारोस्यतोममाभी ष्टमपिदातुंतवपृथग्यत्नःकृतिकर्तव्यंनभवेत्स्वभक्ताभीष्टदातृत्वस्वभावत्वादितियोजना ॥ ७२ ॥

अथकाशिपतेर्विश्वनाथादभीष्टंप्रार्थयति ॥ अयइति ॥ हेविश्वनाथभक्तिःपरमोत्कृष्टायेषांतांस्त्वदनुशरणान्समुद्धर्तुंमहत्त्यांकाश्यांस्वकपुरिस्वस्यपुर्य्यांपरिवसंस्तेभ्यःकृपादृष्ट्याऽभीष्टंवितरसि यतोऽतितराम्वदान्योऽस्यतोममाभीष्टमपिदातुंतवपृथग्यत्नोनभवेदितियोजना ॥ ७३ ॥ अधुनावे

अये विश्वस्वामिन्स्वकपुरिमहत्यां परिवसन्समुद्धर्तुं काश्यां
त्वदनुशरणान् भक्तिपरमान् ॥ कृपादृष्ट्याऽभीष्टं वितरसि व-
दान्योऽस्यतितरांममाभीष्टं दातुं न पृथगपि यत्नस्तव भ-
वेत् ॥ ७३ ॥ त्रिवेणीस्वामिन् भोः स्वकरतजनान्मज्जनपरान्
प्रयागे त्वत्क्षेत्रे परमविमले त्वं च निवसन् ॥ समुद्धर्तुं तेभ्यो
वितरसि पदं स्वं त्वनुपमं कृपादृष्टिं कृत्वा स्वपदमभयं माम-
पि नयेः ॥ ७४ ॥

णीमाधवात्तत्पदंप्रार्थयति ॥ त्रिवेणीस्वामिन्निति ॥ भोस्त्रिवेणीस्वामिन्परमविमलेत्वत्क्षेत्रेप्रयागेमज्जनंस्नानंपरंतात्पर्यविषयीभूतंयेषांतान्स्वकरतजनान्स्वस्मिन्प्रेमयुक्तान्समुद्धर्तुंतस्मिन्नेवप्रयागेत्वंचनिवसंस्तेभ्योऽनुपमंस्वकीयंपदंवितरसिददास्यतःकृपादृष्टिंकृत्वामामप्यभयंस्वपदंनयेः स्वपदेमामपित्वंप्रापयेरित्यर्थः ॥ ७४ ॥

अथस्वप्रतिज्ञांस्मृत्वाधूर्तैःक्लिशितान्स्वजनानवेतिप्रार्थयति ॥ यदेति ॥ यदायदाहिधर्मस्यग्ला
निर्भवतिभारत ॥ अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहमितिधर्मग्लानिसमयेस्वंस्वकीयंवपुर
॥२४॥ हंसृजइत्येवंस्ववपुःसर्जनप्रतिज्ञांकृत्वामहामूढैर्धूर्तैःस्वांस्वकीयांक्लिशितजनतांक्लेशयुक्तंस्वभक्तसमू
हंसम्यगवयन् जानन्नपिपुनर्विलंबंकिमकरोःकस्मात्कृतवान्यतोविलंबःकर्तुमयोग्यस्ततोमूढान्का
मादींस्तद्धतश्चहत्वाहेविभोस्वकजनायेसुपात्राःसुष्टुधर्ममर्यादांस्वात्मानंचपान्तिरक्षयंतितेसुपात्रा

यदा धर्मग्लानिर्भवति हि सृजे स्वं वपुरहं प्रतिज्ञां कृत्वैवं पु-
नरपि विलंबं किमकरोः ॥ महामूढैर्धूर्त्तैः क्लिशितजनतां स्वां
समवयंस्ततो मूढान् हत्वा स्वकजन सुपात्रानवविभो ॥७५॥
वृषं साधून्पातुं जगति हि समुद्भूय कृपया त्वयाऽनेके दैत्याः
प्रसभमभितोऽनाशिषत भोः ॥

स्तानवरक्षेत्यर्थः ॥ ७५ ॥ स्ववपुःसर्जनविलंबमकृत्वास्वकजनसुपात्रानवेत्येतद्विवृण्वन्धर्मत्राणा
यदुष्टान्जहीतिप्रार्थयति ॥ वृषमिति ॥ भोःस्वामिन् परित्राणायसाधूनांविनाशायचदुष्कृताम् ॥
धर्मसंस्थापनार्थायसंभवामियुगेयुगेइत्युक्तेर्वृषंधर्मसाधूंश्चपातुंजगतिकृपयासमुद्भूय नृसिंहरामकृ ॥२४॥
ष्णादिरूपेणावतीर्य्य त्वयाऽनेकेहिरण्यकशिपुप्रभृतयोदैत्याअभितःसर्वतःप्रसभंबलात्कारेणाना
शिपतनाशिताआसन्निदानींकुमतिरूपायादितिस्तज्जाःकामाद्यादैत्याश्चेद्यदिसहसानहनिष्यंतेहे

स्वामिन्तदावृषश्चस्वजनाश्चतेषांरक्षारक्षणंनचभवेदतोधूर्तान्निवार्य्य वृषस्वजनानांभवच्छरणस्यम
मापिरक्षाकर्तव्येतिभावः ॥ ७६ ॥ यथादस्युपीडितोराजानमाश्रित्यरक्षितो भवति । तथाहम
पिगर्वादिदस्युपीडितस्तवशरणागतोऽस्मीत्याह ॥ मयेति ॥ हेस्वामिंस्त्वयिप्रत्यगभिन्नेब्रह्मणि
कथमप्यवगतिर्ज्ञानंभवेदितिमयाशास्त्रमधीतंपठितमासीत्ततः शास्त्राध्ययनाद्गर्वोऽभिमानंप्रभृति
आदियस्यमानधनलिप्सादेस्तज्जातमुत्पन्नं । येनगर्वप्रभृतिनाहकष्टंतमसोनरकस्यगतिःप्राप्तिः

इदानीं कामाद्याः कुमतिदितिजाश्चेन्न सहसा हनिष्यन्ते स्वा-
मिन्वृषस्वजनरक्षा न च भवेत् ॥ ७६ ॥ मयाऽधीतं शास्त्रं
कथमपि भवेत्त्वय्यवगतिस्ततो जातं गर्वप्रभृतितमसो येन
ह गतिः ॥ उपायः शान्तेर्यः स तु भवति दुःखाय बहुलं न
जाने किं भूयादिति च शरणं त्वाहमगमम् ॥ ७७ ॥

स्यात् । तदुक्तंमहाभारते ॥ धनमानार्थनायत्रजायतेशास्त्रसज्जनैः ॥ तेषांदैवोपतप्तानांसलिला
दग्निरुत्थितइति । यःशास्त्राध्ययनादिःशान्तेरुपायोऽस्माभिःक्रियते । सतुतवमाययाप्रत्युतदुःखा
यबहुलंभवत्यतोनजानेकिंभूयादितिहेतोऽहंभीतःसंस्त्वांशरणमगमंप्राप्तोऽस्मीत्यर्थः ॥ मांहिपार्थ
व्यपाश्रित्ययेपिस्युःपापयोनयः ॥ स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिमितिस्मृतेस्त्वांब
लिष्ठमाश्रित्यस्थितेमयिदुर्बलाःकथंप्रतिबध्नीयुरितिभावः ॥ ७७ ॥

28

हेमहाराजममतिर्नटीप्रतिदिनंत्वांस्वनाट्यंदर्शयति ॥ तेनयदिप्रसन्नोऽसि । तर्ह्यस्याअभिलषि
तंशांतिकारणंदेहि । नोचेदेनांनटनाद्वारयेतिप्रार्थयति ॥ महाराजेति ॥ हेमहाराजहेस्वामिन् ।
॥२५॥ स्वमहिमनिपूर्णेस्थितिंजुषतेसेवतइतिस्थितिजुट्तेनत्वयामेबुद्धेःप्रनटनानानाविषयाकारपरिणति
रूपाचेष्टाप्रतिदिनमवेक्षि अवलोक्यतेस्मचेद्यदितांदृष्ट्वात्वंप्रसन्नस्तदाऽस्यैमतिनट्यैयदभिलषितं
ज्ञानवैराग्यादिकंतत्त्वंददर्देहि । नचेत्प्रसन्नस्तर्ह्येषामतिनटीवार्यानटनान्निवारणीयाऽभितःसर्वत

महाराज स्वामिन्स्वमहिमनि पूर्णे स्थितिजुषा त्वया मे बु-
द्धेर्वै प्रतिदिनमवेक्षि प्रनटना ॥ प्रसन्नश्चेन्नट्या अभिलषितम-
स्यै दद विभो न चेदेषा वार्या नटनमभितो नैव कुरुतात् ॥
॥ ७८ ॥ अये कृष्ण स्वामिन्नमरवर विष्णो नरहरे महादेव
स्थाणो भव हर कपर्दिन् पशुपते ॥

स्त्वंनटनंनैवकुरुतात्वनिर्विकल्पा भवेति ॥ ७८ ॥ अधुनाहरिहरयोर्वस्तुतएकत्वेनोपाधिनासम
प्रधानतयाचसेव्यत्वात्तन्नामकीर्तनपूर्वकंताभ्यामभयंप्रार्थयति ॥ अयेकृष्णेति ॥ अयेइतिकोम
लालापे । हेकृष्णस्वामिन् अमरेषुदेवेषुवरःश्रेष्ठस्तत्संबोधनंहेऽमरवर । हेविष्णोव्यापकनरश्चा ॥२५॥
सौहरिःसिंहश्चेतितत्संबोधनंहेनरहरे । महांश्चासौदेवश्चेतितत्सबोधनंहेमहादेव । तिष्ठतीतिस्था
णुस्तत्संबोधनंहेस्थाणो । कूटस्थभवतिसंसारोऽस्मादितिभवस्तत्संबोधनंहेभव । हरतिसंसार

मितिहरस्तत्संबोधनंहेहर । यद्वाभवस्यसंसारस्यहरस्तत्संबोधनंहेभवहरेत्येकंनाम । कपर्दोऽस्य जटाजूटःसोऽस्यास्तीतिकपर्दीतत्संबोधनंहेकपर्दिन् । पशूनामज्ञानांजीवानांपतिस्तत्संबोधनंहेप शुपते । मुरस्यारिस्तत्संबोधनंहेमुरारे । कंसस्यारिस्तत्संबोधनंहेकंसारे । नच्योततेस्वरूपाच्च्यव तइत्यच्युतस्तत्संबोधनंहेऽच्युत । यदूनांपतिस्तत्संबोधनंहेयदुपते । नास्तिनाथोयेषांतेऽनाथास्ते षांशरणमाश्रयस्तत्संबोधनंहेऽनाथशरण । नास्तिमतिर्बुद्धिर्बलंचयस्यनास्तित्वदतिरिक्तोनाथः

मुरारे कंसारेऽच्युत यदुपते नाथशरण त्यजेयाथां नो मा-
ऽमतिबलमनाथं स्वकृपया ॥ ७९ ॥ विधाता चेद्विश्वं सृजति
सृजतां मे शुभकृतिं विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखज-
लधेः ॥ हरः संहर्त्ता संहरतु मम शोकं सजनकं यथा हं मुक्तः
स्यां किमपि तु तथा ते विदधताम् ॥ ८० ॥

शरणंयस्यतंमांयुवांस्वकृपयासंसारभयकूपेनत्यजेयाथां । तस्मादुद्धृत्यस्वपदसविधेनयेयाथामित्य र्थः ॥ तदुक्तं ॥ गोविंदशंकरहरेगिरिजेशमेशशंभोजनार्दनगिरीशमुकुंदसांब ॥ नान्यागतिर्मे मकथंचनवांविहाय तस्मात्प्रभूममगतिःकृपयाविधेयेति ॥ ७९ ॥ अथजगल्लीलानिर्वाहार्थस्वश क्तिगुणैर्मूर्तित्रयंधृत्वाजगदुत्पत्त्यादिकर्तृंस्थिताद्भगवतःस्वानुकूलंतदुत्पादकत्वादि प्रार्थयति ॥ विधातेति ॥ चेद्यदिविधाताब्रह्माविश्वंसृजति तर्हिमेशुभास्वपदप्राप्त्यर्थायाकृतिस्तामेवसृजतां

विरचयतु । विधुर्विष्णुश्चेत्पातापालकस्तर्हिदुःखसागररूपायाजनिमृतेर्मामवतुपालयतु । हरश्चे
त्संहर्त्ताविश्वसंहारकारी तर्हिजनकेनाज्ञानेनसहवर्तमानंममशोकंसंहरतुविनाशयतु यथायेन
॥२५॥ प्रकारेणाहंसंसारभयान्मुक्तःस्यांभवेयं तथातेनैवप्रकारेणतेब्रह्मादयःकिमपिस्वकृत्यंविदधतांकुर्वता
मित्यर्थः ॥ ८० ॥ सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशु
चइतितेवचनंश्रुत्वाऽहंत्वच्छरणागतोऽस्मि । त्वंचस्वप्रतिज्ञातंविधेहीतिप्रार्थयति ॥ समानिति॥हे

समान् धर्मांस्त्यक्त्वा त्वमिह शरणं मां भज सखे ततोऽहं ते
पापाज्जनकसहितान्मोक्षमभितः ॥ करिष्ये माशोचीरिति च
तव वाक्यं श्रुतमतोऽधुना सर्वं त्यक्त्वा शरणमगमं त्वां सुख-
करम् ॥ ८१ ॥ सुपुण्यान्नुर्देहं कथमपि च संगम्य शुभदं हरिं
विस्मृत्यालं स्मरसि विषयांस्त्वं किमु मनः ॥

सखेऽर्जुनत्वंसमान्सर्वान्धर्मांस्त्यक्त्वामदर्थंपरित्यज्येहजगतिमांशरणंभज । ततःसर्वंत्यक्त्वामच्छ
रणभजनात्जनकमज्ञानंतत्सहितात्पापात्तेमोक्षमभितोऽहंकरिष्येत्वंमाशोचीरितितेप्रतिज्ञावाक्यं
मयाश्रुतमतोऽधुनासर्वंत्यक्त्वासुखकरंत्वांशरणमगमंप्राप्तोऽस्मीत्यर्थः ॥८१॥ अयंसमयोनमिलि ॥२६॥
ष्यतीतिस्वात्मानंभजस्वेतिस्वमनःशिक्षयति ॥ सुपुण्यादिति ॥ हेमनःसुपुण्यात्कथमपिशुभदं
नुर्मनुष्यस्यदेहंसंगम्यप्राप्यहरिस्मरणंकर्तव्यं । केनापिपुण्येनमनुष्यजन्मलब्ध्वाहरिर्येननतो

षितोऽभूत् । उच्चाटनेहाकरटस्यतेनचिंतामणिर्मूढतरेणक्षिप्तइत्युक्तेस्तंतुविस्मृत्यविषयांस्त्वमलम तिशयेनकिमुस्मरसि । ध्यायतोविषयान्पुंसःसंगस्तेषूपजायते । इत्यादिनातस्यानर्थकरत्वोक्तेः हेमूढमनःस्वकहितकरोयंकालोगच्छति । हियस्मात्तस्मात्परसुखनिधिंस्वात्मानंत्वंभजस्व । येन भजनेनतेतवसुखितासर्वदासुखित्वंभवेदित्यर्थः ॥ ८२ ॥ अधुनास्वचक्षुरिंद्रियंमित्रभावेनशिक्ष

अयं कालो मूढ स्वकहितकरो गच्छति हि ते भजस्व स्वात्मानं
परसुखनिधिं येन सुखिता ॥ ८२ ॥ अये चक्षुर्मे त्वं जगदिद-
मलं पश्य वितथमधिष्ठानं तस्य प्रकृतिविमलं वीक्षतु यतः ॥
यदैवं पश्येस्त्वं सफलजनिमत्वं भवति ते न चैवं पश्येश्चेद्बिल-
मिव हि भित्तेस्त्वदुपमा ॥ ८३ ॥ अये श्रोत्र त्वं मे हरिगुणग-
णान्किन्न शृणुया जगद्गीतिश्रुत्या किमपि हि फलं नैव मिलति ॥

यति ॥ अयेचक्षुरिति ॥ हेमेचक्षुर्जगदिदमलमतिशयेनवितथंमिथ्याभूतंत्वंपश्य । यतोमिथ्या दर्शनात्तस्यजगतोऽधिष्ठानंप्रकृत्यास्वभावेनविमलमयंजनोवीक्षतुविशेषेणपर्य्यालोच्यजानातु । हे चक्षुर्यदात्वमेवंजगन्मिथ्यात्वेनपश्येस्तदातेजनिमत्वंसफलंभवति । यद्येवंत्वन्नपश्येस्तदाभित्तेःकु ड्यस्यबिलंछिद्रमिवत्वदुपमाभित्तिछिद्रमिवत्वंव्यर्थमसीत्यर्थः ॥ ८३ ॥ अथश्रोत्रेंद्रियंमित्रभावेन शिक्षयति ॥ अयेश्रोत्रेति ॥ अयेमेश्रोत्रहरिगुणानांयोगणःसमूहस्तंकिंनशृणुयाःहियस्माज्जग

तोगीतेर्वार्तायाःश्रुत्याश्रवणेनकिमपिफलंनैवमिलति ॥ तस्मात्तस्यपरमेश्वरस्ययशःश्रुत्वास्वज नेर्जन्मनःफलमेहि । आसमन्तात्प्राप्नुहि । जगद्गीतिंश्रुत्वामृगइवयथावद्धकनादंश्रुत्वामृगोव
॥२७॥ ध्यते । तथाजगद्गीतिंश्रुत्वात्वंसितोवद्धोनचभवेर्माभूरित्यर्थः ॥ ८४ ॥ तथेदानींरसनेंद्रियंशिक्ष यति ॥ रसज्ञइति ॥ रसंजानातीतिरसज्ञातत्संबोधनंहेरसज्ञेजिह्व । हरिनाम्नोरसंत्वंझटितिपिब । यतःसंसारस्यरसःक्षणिकोविषयेंद्रियसंबंधकालिकइतिहेतोर्दुःखायभवति । आत्मरूपेहरिसुखेश्रु

यशस्तस्य श्रुत्वा स्वजनिफलमेहि त्वममलं जगद्गीतिं श्रुत्वा
मृगइव सितस्त्वं न च भवेः ॥ ८४ ॥ रसज्ञे हे जिह्वे झटिति
हरिनाम्नः पिब रसं रसः संसारस्य क्षणिक इति दुःखाय भव-
ति ॥ रसो वै सः स्वात्मा श्रुतिरिति तमेवानुवदति रसं मा-
त्रास्पर्शाः स्मृतिरिति वदेन्नाशिनमपि ॥ ८५ ॥

तिंप्रमाणयन्ननित्येसांसारिकसुखेस्मृतिंप्रमाणयति ॥ रसोवैसइति ॥ रसोवैसः । रसंह्येवायंल ब्ध्वाऽऽनन्दीभवतीति । सःस्वात्मारसआनंदरूपस्तंलब्ध्वाऽयमानन्दीभवतीतिश्रुतिस्तमेवहरिना मोपलक्षितंसुखमेवानुवदति । कथयति । मात्रास्पर्शास्तुकौन्तेयशीतोष्णसुखदुःखदाः ॥ आगमा ॥२७॥
पायिनोनित्यास्तांस्तितिक्षस्वभारतेति स्मृतिर्विनाशिनंरसंवदेत् । अपिशब्दात्तस्यविनाशित्वं लोकप्रसिद्धमप्यस्तीत्यर्थः ॥ ८५ ॥

अधुनावागिंद्रियंशिक्षयति ॥ त्वमुग्रइति ॥ उग्रेक्रूरे हेवाचेकिमितिकस्मात्परुषंकठोरवाक्यंदुष्टुबी भत्सितंत्वंवदसिमावदेत्यर्थः । जनेष्वीशंज्ञात्वाऽमलंनिर्मलंसत्यमितियावत्सुखकरंप्रियंहितंचेत्यर्थः । वाक्यंवदब्रूहि । तदुक्तंभगवता । अनुद्वेगकरंवाक्यंसत्यंप्रियहितंचयत् ॥ स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यतइति । उक्तमन्यत्रापि । प्रियवचनप्रवादेनसर्वेतुष्यंतिजन्तवः ॥ तस्मात्तदेववक्तव्यंवचनेकादरिद्रतेति । वाऽथवादयाब्धेःपरमेश्वरस्यनामानीहजगतिस्वरसमधुराणित्वं

त्वमुग्रे हे वाचे किमिति परुषं दुष्टु वदसि जनेषु ज्ञात्वेशं वद
सुखकरं वाक्यममलम् ॥ दयाब्धेर्नामानि स्वरसमधुराणीह
वद वा भवाब्धिं त्यक्त्वेशं सुखनिधिमयं गच्छतु यतः ॥ ८६ ॥
मनो मे नाथ त्वां स्मरतु सततं दीनशरणं तथा श्रोत्रं वाक्
श्रवणवदने ते हि कुरुताम् ॥

वद यतएवंभूतात्त्वद्वचनादयंजीवोभवाब्धिंसंसाररूपब्धिंत्यक्त्वासुखनिधिमीशंगच्छतुप्राप्नुयादित्यर्थः ॥ ८६ ॥ अथसमुच्चयेनमनआदिसंघातस्यपरमेश्वरप्रवणत्वंप्रार्थयति ॥ मनइति ॥ हे नाथमेमनःसततंनिरंतरंदीनानामनाथानांशरणंत्वास्मरतु ।तथाश्रोत्रंवाक्तेतवश्रवणंचवदनंचश्रवणवदनेकुरुताम् । तथामदीयोमौलिर्मस्तकंसकलान्तःसर्वस्यमध्येचितिःसुखंचयस्यतंत्वांनमतुप्रह्वीभूयादित्येवमिदंमेसर्वांगंनियतंनित्यंत्वयिविपर्येहेनाथविशतुप्रविशतु । नतुश्रवणवदनो

पलक्षितं ज्ञानकर्मेंद्रियंबहिर्मुखंप्रभुणाहिंसितंस्यादित्यर्थः ॥ ८७ ॥ पवित्रस्त्वमितरान्पावयन्म
ममनःपावयेतिप्रार्थयति ॥ पवित्रइति ॥ हेनाथत्वंपवित्रोऽसि । यतःशुद्धोऽविद्यातत्कार्यमलशू
न्यः । स्वयंधनीतरान्धनिनःकरोतीति न्यायेनजडमप्यमुंसंघातंस्वचितिवशतःस्वकीयचैतन्यश
क्त्यापुनीषेपावयसि । हियस्मात्त्वदृतेत्वांविनावीध्रंविमलंकिमपिनभवति ननुश्रीगंगादीना

मदीयो मौलिस्त्वा नमतु सकलांतश्चितिसुखमितीदं सर्वाङ्गं
त्वयि हि नियतं नाथ विशतु ॥८७॥ पवित्रस्त्वं शुद्धः स्वचि-
तिवशतोऽमुं जडमपि पुनीषे नाथ त्वं न हि भवति वीध्रं त्वदृ-
दृते ॥ पुनंते गंगाद्या यदपि तदपि त्वत्पदजनेर्मनो मे तस्मा-
त्त्वं कुरु विमलमेतु त्वयि लयम् ॥८८॥ स्वयं धन्योऽसि त्वं
जगदुदयरक्षालयकरस्ततो भूयो धन्यः सति चिति सुखे
स्वात्मनि सदा ॥

मपिलोकेवेदेचपवित्रत्वंपावयितृत्वंचप्रसिद्धमितितत्राह । यदपिगंगाद्याःपुनंतेतदपित्वत्पदज
नेःतवपदंजनिरुत्पत्तिःकारणंयस्यतस्मात् यत्रयत्रपवित्रत्वंपावयितृत्वंचतत्रतत्रतवसंबंधादेवेति
भावः । यस्मात्पवित्रःपावयिताचत्वमेवतस्मान्मेमनस्त्वंविमलंकुरुयेनत्वयिलयमेतुप्राप्नोत्वित्य
र्थः ॥ ८८ ॥ सर्वथात्वंस्तुत्योऽसीत्याह ॥ स्वयमिति ॥ हेभगवन्यतोजगदुदयरक्षालयकरोऽतः

॥२८॥

स्वयंस्वात्मनैवत्वंधन्यःश्लाघ्योसि । ततस्तस्मादपिभूयोबाहुल्येनधन्योयतःसतिचितिसुखेसच्चि
दानंदरूपेस्वात्मनिस्थितोऽसि । अतोपिस्तुत्यो यतःशत्रौसुहृदिमित्रेचसमदृगसिसमाबुल्याद्द
क्दृष्टिर्यस्यससमदृक्त्वंशत्रवेमित्रायचस्वपदंसमंददासीत्यर्थः ॥ तदुक्तम् ॥ येयेहताश्चक्रधरेणदै
त्यास्त्रैलोक्यनाथेनजनार्दनेन ॥ तेतेगताविष्णुपुरींनरेन्द्राःक्रोधोपिदेवस्यवरेणतुल्यइति ॥ ननु
देवान्दैत्यांश्चामृतंसुरांश्चपायन्विषमःप्रतीयइतिकथंसमदृगितितत्राह ॥ परन्त्विति ॥ यात्वद्भ

स्थितोतोपि स्तुत्यः समदृगसि शत्रौ च सुहृदि परन्तु त्वद्भ-
क्तिस्त्वयि विषमदृष्टिं गमयते ॥८९॥ महायोगिध्यातः स्फु-
रसि हृदयेऽत्यंतविमले महाभोगिस्मृत्या त्रिदिवविषयान् रा-
सि सुखदान् ॥ तथातैर्हृताब्जो वितरसि च तेभ्यस्त्वमपि
शंतथार्तोऽहं स्वामिन्वितर कृपया मेऽपि च शिवम् ॥ ९० ॥

क्तिःसात्वयिविषमांस्वभक्तहितैषीतरद्वेषीत्येवंभूतांदृष्टिंगमयतेप्रापयति । समेपित्वयियाविषमदृ
ष्टिःसात्वद्भक्तेरेवप्रभावइतिभावः ॥ ८९ ॥ चतुर्विधाभजंतेमांजनाःसुकृतिनोऽर्जुन ॥ आर्तोजि
ज्ञासुरर्थार्थीज्ञानीचभरतर्षभेत्युक्तानांचतुर्विधानामार्तायमेशिवंदेहीतिप्रार्थयति ॥ महायोगीति ॥
महायोगिनस्तत्त्वविदोजिज्ञासवश्चतैर्ध्यातोऽत्यन्तविमलेतेषांहृदयेत्वंस्फुरसिभाससे भासिष्यसेच
महाभोगिनोविषयपरायणाअर्थार्थिनस्तेषांस्मृत्यातरकर्तृकतवस्मरणेनतेभ्यःसुखदान्त्रिदिवविष

30

 यान्स्वर्गपदार्थांस्त्वंशासिददासि । तथातैर्दुःखपीडितैर्ह्वैतमुच्चारितमाह्वंनामयस्यसत्वंतेभ्योपिशं 
सुखंवितरसिददासि। हेस्वामिन्तथैवाहमप्यार्तःसंसारभयपीडितस्त्वच्छरणोऽतः कृपयामेऽपिशि
॥२९॥ वंकल्याणंवितरदेहीत्यर्थः ॥ ९० ॥ अस्मिञ्जगतियउपासकास्तेस्वरुच्यनुसारेणविष्ण्वादिदेवान्
परिच्छिन्नयाद्दष्टयेशत्वेनोपासते । अहंतुत्वदतिरिक्तंकिमपिनपश्यामीत्याह ॥ विधुमिति ॥ हेस्वा
मिन्केचिद्वैष्णवास्त्वांविधुंविष्णुंवदंति । शैवास्त्वामीशंमहादेवंवदंति । अपरेगाणपतास्त्वांगण

विधुं केचित्त्वीशं गणपमपरे शक्तिमथ वा वदंत्यन्ये त्वां वै
रविमपि तथा पद्मभुवनम् ॥ रुचीनां वैचित्र्यात्समयमथ
भूतप्रभृतिकमहं तु त्वत्तोऽन्यन्न च किमपि पश्यामि जगति
॥ ९१ ॥ क्वचिद्बालो भूत्वा सहसि बत दुःखं त्वमनिशं क्वचि-
त्स्त्रीमल्लैश्च प्रहससि युवा युध्यसि विभो ॥

पंवदंति । अथशाक्तास्त्वांशक्तिंदुर्गादिरूपांवदंति । अन्येवैत्वांरविंवदंति । अपिशब्दात्केचिद
ग्निचंद्रादिरूपंत्वांवदंतीतिबोध्यं तथाकेचित्त्वांपद्मभुवनंब्रह्माणंवदंति । एवंरुचीनांवैचित्र्यात्के
चित्त्वांसमयंकालंवदंति । अथापरेभूतःप्रभृतिरादिर्यस्यपिशाचरक्षोगणस्यतद्भूतप्रभृतिकंत्वांवदं ॥२९॥
ति । हेभगवन्नहंतुजगतित्वत्तोऽन्यत्किमपिवस्तुनचपश्यामियत्त्वदतिरिक्तंभवेदित्यर्थः ॥ ९१ ॥
अथासंगोऽपिमायाशक्त्यानटइवक्रीडसीत्याह ॥ क्वचिदिति ॥ हेविभोकस्मिंश्चित्समयेबालोभू

त्वाबताहोकष्टंयशोदादिताडनजंदुःखंत्वमनिशंनिरंतरंसहसि । कदाचिच्चयुवासन्स्त्रियश्चमल्लाश्च तैःसहप्रहससियुध्यसिच । भूयःपुनर्गुरुर्भूत्वाऽमलंनिर्मलंज्ञानमर्जुनादिभ्यस्त्वमुपदिशसीतीमां क्रीडांनटइवप्रकृतिवशतोमायावशात्वंतनुषेविस्तारयसि । यथानटोऽविकृतएवस्वमाययाऽन्याम्रा काशगमनादिस्वस्मिन्दर्शयति । तथाऽविकृतएवत्वंस्वस्मिन्स्वमाययाजगल्लीलांदर्शयसीतिभा वः ॥ ९२ ॥ अधुनास्वप्रकाशात्माविद्वन्मतिवेद्योमेशरणंभवत्वितिप्रार्थयति ॥ घटइति ॥ यः

गुरुर्भूत्वा भूयस्त्वमुपदिशसि ज्ञानममलं तनोषीमां क्रीडां
प्रकृतिवशतस्त्वं नट इव ॥ ९२ ॥ घटे नानाछिद्रे स्थितमणि-
रिवाति स्फुरति यः स्वयं बोधो देहे प्रचरति ततश्चेंद्रियसृतेः ॥
बहिर्दृश्यं नित्यं स्वकमहिमनि द्योतितमहाः स आत्मा सर्वे-
षां विमलमतिवेद्योस्तु शरणम् ॥ ९३ ॥

स्वयंबोधःस्वप्रकाशज्ञानात्मानानाछिद्रेघटेस्थितमणिरिवदेहेऽतिस्फुरति । ततोदेहादिंद्रियसृतेरिन्द्रियद्वाराद्बहिर्दृश्यंप्रचरति । बुद्धिवृत्त्युपाधिनागच्छति बहिर्गच्छतिचेत्तर्ह्यन्तर्नस्यादतआह नित्यंसर्वदास्वकीयोमहिमास्वरूपंतत्रद्योतितंमहस्तेजोयस्यसविमलासंशयविपर्ययरहितातत्त्वमस्यादिमहावाक्यजन्यामतिस्तद्वेद्यःसर्वेषांकार्यकारणरूपेणप्रतीयमानानामात्माऽधिष्ठानंमेशरणमस्तु। तस्मिन्नेवममाभेदेनस्थितिःस्यादित्यर्थः ॥ ९३ ॥

यःपरमात्मेंद्रादिदेवानांस्वभक्तानांजयकारणंसोऽरिनिवहेममापिशरणमस्त्वितिप्रार्थयति ॥ यमि
ति ॥ इंद्राद्यादेवायंपरमात्मानमाश्रित्यदैत्यानांनिवहस्समूहस्तस्मात्स्वजयमलभन्लब्धवंतः ।
 यंचयक्षंपूज्यंपरमात्मानमज्ञात्वास्वजयविषयमोहमगमन् । यक्षकर्तृकेजयेस्मत्कर्तृकोयंजयइति
भ्रांतिंप्राप्ताइत्यर्थः । ततोभ्रान्तेरनंतरंगौरीपार्वतीतस्याआदेशादुपदेशाद्यंयक्षमधिकंबलवीर्यश
क्त्यासर्वदेवातिशायिनमतएवजयदमभिज्ञायसर्वतोज्ञात्वागर्वमस्माकमेवायंविजयइत्यभिमानंज

यमाश्रित्येंद्राद्याः स्वजयमलभन्दैत्यनिवहात् यमज्ञात्वा यक्षं
स्वजयविषयं मोहमगमन् ॥ ततो गौर्यादेशाद्यमधिकमभि-
ज्ञाय जयदं जहुर्गर्वं सोऽयं भवतु शरणं मेऽरिनिवहे ॥ ९४ ॥
यदाज्ञातो ब्रह्मा सृजति सकलं पाति च विधुस्तथा रुद्रो दे-
वोऽस्य लयमधिकं साधु कुरुते ॥

हुस्त्यक्तवंतः । सोऽयंयक्षःपूज्यःपरमात्माऽरिनिवहेकामक्रोधादितद्वच्छत्रूणांसमूहेमेशरणंभवत्वि
तियोजना ॥ ९४ ॥ जगदुत्पत्तिस्थितिलयकर्तृत्वंयद्ब्रह्मणस्तटस्थलक्षणंतद्यस्यास्तिसोमेभक्तिवि
षयोस्त्वितिप्रार्थयति ॥ यदाज्ञातइति ॥ यस्यपरमात्मनआज्ञातोब्रह्मासकलंजगत्साधुसृजति । 
विधुर्विष्णुःसकलंसाधुपातिरक्षति । तथारुद्रोदेवोऽस्यजगतोऽधिकंनिरवशेषंसाधुलयंकुरुते । एते
षांत्रयाणांदेवानामुत्पत्त्यादिषुमध्येएकैकंकार्यद्वयमृतेविनाएतदुत्पत्त्यादित्रयंयस्यसचभगवुतःष

द्विधैश्वर्य्यसंपन्नोमेभक्तिविषयोऽस्तुभवत्वित्यर्थः ॥ ९५ ॥ इदानींहेभगवन्यथानगादयोबहव
स्त्वयासंसारसागरात्तारितास्तथाशरणागतंमामपितस्मात्तारयेतिप्रार्थयति ॥ नगाइति ॥ हे
स्वामिन्नगायमलार्जुननामकावृक्षाः । दैत्याःप्रह्लादबलिप्रभृतयः । कीशाःसुग्रीवहनुमदाद
यः मर्कटाअन्येचशबरीविभीषणादयइमेसर्वे त्वयाभवजलधेःपारंस्वस्वरूपंगमिताःप्रापिताइत्य

त्रयाणामेकैकं सततमपि कार्यं द्वयमृते त्रयं यस्यैतत्सोऽस्तु
च भगयुतो भक्तिविषयः ॥ ९५ ॥ नगा दैत्याः कीशा भवजल-
धिपारं हि गमिता स्त्वया चाऽन्ये स्वामिन्किमितिसमयेस्मि-
न् शयितवान् ॥ न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि
विभो न हि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ॥ ९६ ॥
शिवानन्दः सत्ताचिदपि भवतो यस्य जगति तथा स्वांते
स्वच्छे स्फुरति तव रूपं स्फुटतरम् ॥

र्थः । अस्मिन्समयेममोद्धारकालेकिमितिकस्मात्त्वंशयितवान्शयनमकरोः । हेविभोत्वयिनिहि
तंसमर्पितंसर्वंयेनतस्मिन्मयित्वंहेलांतिरस्कारंनकुर्याः । हियस्मात्त्वांहित्वापरित्यज्यान्यंकमपिश
रणंनचागमम्नैवप्राप्तोस्मीत्यर्थः ॥ ९६ ॥ अथमुक्तोपसृप्यंवेदवेद्यंप्रत्यगभिन्नंब्रह्मस्वरूपमनुसंद
धाति ॥ शिवानंदइतिपङ्क्तिः ॥ हेशिवशिवमद्वैतंचतुर्थंमन्यंतइतिश्रुतिप्रतिपाद्ययस्यभवत आनं

दोजगतिभाति । एतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्तीतिश्रुतेः । तथायस्यभवतः सत्ताचिच्चैतन्यंचजगतिभातः । तथास्वच्छेसत्वकार्यत्वान्निर्मलेस्वान्तेऽतःकरणेयस्यतवरूपंचैत
॥३१॥ न्यात्मकंस्फुटतरंस्फुरति । तदेवधियोवृत्तेर्बुद्धेस्तद्वृत्तीनांचसाक्षिसत्प्रलयमुदयंबुद्धेस्तद्वृत्तीनांचवि नाशमुत्पत्तिंचसततंवेत्तिस्वरूपचैतन्येनजानातिसनोऽस्माकंसर्वेषामात्मा ॥ तत्रप्रमाणमाह ॥ निगमोवेदः ॥ सत्यंज्ञानमनंतंब्रह्मतत्त्वमसीत्यादिलक्षणो मुनयस्तदर्थमननशीलास्तैर्निगदितो

धियो वृत्तेः साक्षिप्रलयमुदयं वेत्ति सततं स आत्मा सर्वेषां
निगममुनिभिर्नो निगदितः ॥ ९७ ॥ न मे धर्माधर्मौ न च
नरकनाकौ कथमपि न रागद्वेषौऽस्तांस्त्रिविधतनुसंगं हृतवतः॥
न भेदाभेदौ मे विदलितमहाज्ञानतमसः सदा स्वात्मानन्दे
निरवधिमहिम्नि स्थितिरलम् ॥ ९८ ॥

निश्चित्यतात्पर्यतयानिरूपितइत्यर्थः तमेवस्वस्वरूपेणनिश्चित्यसंसारान्मुच्यतइतिभावः ॥९७॥ नमइति॥ धर्मश्चाधर्मश्चतौमेममनभवतस्तयोरभावेचपुनर्नरकश्चनाकश्चतौकथमपिनभवतः।ननु रागद्वेषयोःसत्वेतत्पूर्वकप्रवृत्त्याधर्माधर्मद्वारास्वर्गनरकौत्वयिस्यातामितितत्राह ॥ नरागद्वेषौमे ॥३१॥
ऽस्तः । कीदृशस्यमेत्रिविधतनुसंगंहृतवतःस्थूलसूक्ष्मकारणभेदेनत्रिविधंयत्तनुःशरीरंतस्यसंगंहृत वतः । रागद्वेषपूर्वकप्रवृत्त्याधर्माधर्मयोःशरीरत्रयसाध्यत्वात्तद्भिन्नस्यमेस्वर्गनरकादिकंकथंभवेत्॥

॥ तदुक्तंभगवता ॥ यथासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते ॥ सर्वत्रावस्थितोदेहेतथात्मानोपलिप्यतइति ॥ नन्विदानीमज्ञानकृतस्त्वयिभेदोज्ञानेनतन्निवृत्तावभेदोभविष्यतीतितत्राह ॥ नभेदाभेदौमेविदलितंस्वरूपमहिम्नाविनाशितंमहदज्ञानलक्षणंतमोयेनतस्यममभेदाभेदौनस्तः । यथास्वस्वरूपमहिम्नानिरस्ततमसिसूर्य्येदिनरात्रिव्यवहारोनास्ति । तथामय्यपिभेदाभेदव्यवहारोनसम्भवतीतिभावः ॥ तस्मान्निर्गताऽवधिरन्तोयस्मात्समहिमायस्यतस्मिन्स्वात्मानंदेमेसदासर्वदा

न जन्माद्या धर्मा मयि जडशरीरादिरहिते मदाधारं सर्वं स्फुरति करतोयं भुवि यथा ॥ अहं शुद्धोऽसंगो न च मयि सुखाद्यास्ति विकृतिरिति ज्ञात्वात्मानं भवति भयशून्यः सुखमयः ॥ ९९ ॥

ऽलमतिशयेनच्युतिरहितास्थितिरस्तीत्यर्थः । तस्मिन्नेवमुक्तानांसर्वेषांस्थितिरितिभावः ॥ ९८ ॥

परात्माभिन्नमात्मानंज्ञात्वाभयशून्योभवतीत्याह ॥ नजन्माद्याइति ॥ जायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेविनश्यतीति । जन्माद्याधर्माजडानियानिशरीरादीनिप्राणेंद्रियमनांसितद्रहितेमयिनसंति । तेषांतद्धर्मत्वात् । भुविमरुस्थलेकरेषुसूर्यरश्मिषुतोयंयथामिथ्यैवस्फुरति । तथाऽऽध्यात्मिकादिभेदेनभिन्नंसर्वंजगन्मदाधारंअहमाधारोऽधिष्ठानंयस्यतत्तथास्फुरति । शुक्तौरजतवन्मिथ्यैवभासतइत्यर्थः । ननु त्वयिकल्पितेनतवमलिनतास्यादतआह ॥ अहंशुद्धोयतोऽसंगः । अ

संगोह्ययंपुरुषइतिश्रुतेः । नहिसूर्य्यादिषुकल्पितेनांधकारादिनातेषांकिंचिद्धीयतेइतिभावः ॥ न न्वहंसुखीत्यादिप्रतीतेस्त्वय्यपिसुखादिविकारोभासतइतिकथमसंगइतितत्राह ॥ मयिसुखाद्यावि कृतिर्नचास्ति । सुखादीनामंतःकरणधर्मत्वेनतत्तादात्म्याध्यासान्मयिप्रतीतेरतोहंवस्तुतोऽसंगए वेतिभावः । इत्येवमात्मानंज्ञात्वाभयशून्यःसुखमयोभवति । तरतिशोकमात्मवित् । आत्मानं विद्वान्नबिभेतिकुतश्चन । ब्रह्मविद्ब्रह्मैवभवति । इहचेदवेदीदथसत्यमस्तीत्यादिश्रुतेः ॥ ९९ ॥ बहिरंतरोभयकरणाप्रकाश्यस्तेषांमयिप्रकाशकःस्वप्रकाशात्माहमितिनिश्चित्यकृतकृत्योभवतीत्या

न बुद्ध्या भास्योऽहं स्वदृगपि न वाणीश्रुतिमुखैर्ममाधीनाः
सर्वे मतिवदननेत्रप्रभृतयः ॥ प्रवर्तंते नित्यं स्वकविषयश-
ब्दादिनियतमतोऽहं बोधात्मेति भवति विनिश्चित्य मुदितः ॥१००॥

ह ॥ नबुद्ध्येति ॥ वाणीचश्रुतिश्चवाणीश्रुतीतेमुखेआदीयेषांपाण्यादिकर्मेंद्रियाणांचक्षुरादिज्ञा नेंद्रियाणांचतैरहंनभास्यःप्रकाश्योऽपरिछिन्नत्वेसतिरूपरहितत्वात् । तथाबुद्ध्यापिनभास्योयतःस्व दृक्स्वप्रकाशोस्मि । घटादिजडपदार्थेषुबुद्ध्याऽज्ञानकृतावरणभंगःक्रियते । तदवछिन्नचैतन्येन तुघटादिःप्रकाश्यते । स्वप्रकाशआत्मनितुबुद्ध्याऽऽवरणभंगएवभवति । तदवच्छिन्नचैतन्यात्तुप  योगात् । घटादिचाक्षुषज्ञानेचक्षुःप्रकाशोभयापेक्षा । सूर्यादीनांस्वप्रकाशानांतुचाक्षुषज्ञानेचक्षु र्मात्रापेक्षा । तद्वदात्मज्ञानेबुद्धिमात्रापेक्षत्वेपितदवच्छिन्नचैतन्यापेक्षाभावान्नबुद्धिभास्यइत्युक्तं ।

मतिर्बुद्धिर्वदत्यनेनेतिवदनंवागिन्द्रियंनेत्रंचक्षुःप्रभृतिशब्देनशेषाणिकर्मज्ञानेंद्रियाणिगृह्यन्ते। त
एतेमतिवदननेत्रप्रभृतयःसर्वेममचैतन्यस्याधीनाःसन्तःस्वकीयायेविषयाःशब्दादयस्तेषु नियतं
नियमेननित्यंसर्वदाप्रवर्तन्ते ॥ तदुक्तम् ॥ आत्मचैतन्यमाश्रित्यदेहेंद्रियमनोधियः॥स्वकीयार्थेषु
वर्तन्तेसूर्यालोकंयथा जनाइति । अतोबुद्ध्याद्यप्रकाश्यत्वेसतितत्प्रकाशकत्वाद्बोधात्माज्ञानस्वरू
पोहमेवेतिनिश्चित्यमुदितआनंदरूपोभवति । ब्रह्मविद्ब्रह्मैवभवति । तरतिशोकमात्मविदित्या
दिश्रुतेरित्यर्थः ॥ १०० ॥ मदरिक्तस्यसर्वस्यमयिकल्पितत्वादद्वैतोऽहमित्याह ॥ अहमिति ॥

अहंकारादिर्मे न भवति न तद्गोचरचयो निराकारः स्थायी
निजमहिमनि ह्यात्मरसिकः ॥ प्रपंचोऽविद्यादिश्च भवति वि-
वर्तो मयि मृषा ततोऽद्वैतात्माऽहं निरवधिसुखज्ञानजलधिः ॥१०१॥

प्रकृतिविकारोहंकारादिसंघातस्तेषामहंकारादीनां येगोचराविषयास्तेषांचयःसमूहश्चमेममसंबंधी
नभवति । असंगोह्ययंपुरुषइत्यादिश्रुतेः । हियस्मादहंनिराकारःआकारोमूर्तिस्तद्रहितः । नि
जमहिमनिस्थायीनिजःस्वकीयोयोमहिमातत्रस्थितिशीलःकूटस्थइत्यर्थः । ननु बाह्यविषयरसमनु
भवन्कथंकूटस्थइतितत्राह ॥ आत्मनिरसआनन्दोऽस्यास्तीत्यात्मरसिकःसर्वत्रममैवानन्दोनतुकु
त्रचिदपिजगतिस्वकीयआनंदइत्यर्थः ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति । एष
एवानंदयाति । आनंदोब्रह्मेतिव्यजानादित्यादिश्रुतेः ॥ ननु प्रपंचस्यत्वयिविद्यमानत्वेऽहंकारा

दिभिरसंगत्वंकथमितितत्राह ॥ प्रपंचइति ॥ अविद्याआदिर्यस्याहंकारादेःसप्रपंचोमय्यसंगकूट
स्थेविवर्त्तोऽनाद्यविद्ययाप्रतीयतेऽतोरज्जुसर्पवन्मृषाततःअसंगेमयिप्रपंचस्यारोपितत्वात्निरवधि
॥२३॥ नित्यंयत्सुखंज्ञानंचतस्यजलधिःसमुद्रोऽद्वैतात्माहमस्मीत्यर्थः ॥ १ ॥ अधुनाश्रीगुरोर्महतांस
च्छास्त्रस्यचप्रसादाददतिनिर्मलस्वप्रकाशात्मामेहृदिस्फुरतीत्याह ॥ स्वतइति ॥ स्वभावादेवशु
द्धोनतुकेनचिक्रियते । बुद्धोज्ञानस्वरूपः । समरसएकरसोघनोमूर्तिःस्वरूपंयस्यसोऽखंडानंदस्व

स्वतः शुद्धो बुद्धः समरसघनो यो निरभयो मनो बुद्धी तज्जां-
स्तदनु विषयांश्चोभयविधान् ॥ क्रियां कर्त्रादीन्यस्तदुदय-
लयौ वेत्त्यविकृतः स्वयंभादात्मा स स्फुरति त्हृदयेमेऽति-
विमलः ॥ १०२ ॥

रूपइत्यर्थः ॥ नन्वेवंभूतःसकुतोजातइतितत्राह ॥ अयोनिःनास्तियोनिःकारणंयस्यसःसतुनकुतो
पिजातःप्रत्युततस्मात्सर्वंजातमित्यर्थः अतएवाभयःनास्तिभयंयस्यसएवंभूतोऽविकृतोमनश्चबुद्धि
श्चतेउभेवेत्ति तज्जांश्चमनोबुद्धिप्रत्ययान्वेत्तितदनुतदनंतरंचोभयविधान् विहितान्निषिद्धांश्चबा
ह्यानभ्यंतरांश्चवाविषयान्वेत्ति । क्रियांगमनादिलक्षणां कर्ताआदिर्येषांकर्मकरणादीनांतान्वेत्ति ॥२३॥
तदनुतदुदयलयौतेषांमनोबुद्ध्यादीनांजाग्रदादावुदयंसुषुप्त्यादौलयंचवेत्ति । सस्वयंभादात्मास्व
यंभातीतिस्वयंभान्सचासावात्माऽतिविमलोमेहृदयेगुर्वादीनांप्रसादात्स्फुरतिभासतइत्यर्थः १०२

इदानींभगवच्छेषप्रभृतीनांसर्वज्ञानामपितवगुणेयत्ताज्ञानंनास्तीति काकथामादृशानामल्पज्ञानांतथापिनभःपतन्त्यात्मसमंपतत्रिणइतिन्यायेन यथाबुद्धिबलंत्वांस्तुवन्कृतार्थोभविष्यामीतिमनसिनिश्चित्याहंतेस्तुतिंकृतवानित्याह ॥ अनंताद्याइति ॥ अनंतःशेषःआद्योयेषांब्रह्मगणेशसरस्वतीबृहस्पतिव्यासवाल्मीकप्रभृतीनांतेऽनंताद्याःविज्ञाःसर्वज्ञास्तेतेतवगुणाएवजलधिः समुद्रस्तस्यांतंपर्यवसानंनागमन् नप्राप्ताआसन् ॥ अतोहेतोरयमल्पज्ञोमादृशोजनस्तवगुणगणा

अनंताद्या विज्ञा न गुणजलधेस्तेंऽतमगमन्नतः पारं यायात्त-
वगुणगणानां कथमयम् ॥ गृणन्यावद्धित्वां जनिमृतिहरं याति
परमां गतिं योगिप्राप्यामिति मनसि बुद्ध्वाहमनवम् ॥१०३॥
परस्यानंदाब्धेरमृतलहरीं भक्तिजननीमिमां यः सानन्दः
पठति पुरुषो याति परमाम् ॥

नांपारंकथंयायात्प्राप्नुयान्नकथमपीत्यर्थः ॥ अथयदिममगुणानामंतएवनास्तितर्हितवस्तुतिरननुरूपाभवेदितितत्राह ॥ जनिमृतिहरंत्वांयावद्धिस्वबुद्ध्यनुरूपंगृणन्स्तुवन्मादृशोनरोपियोगिप्राप्यां परमां गतिंयातिप्राप्नोतीतिमनसिबुद्ध्वाज्ञात्वाहंत्वामनवम् तवस्तुतिमकरवमित्यर्थः॥१०३
ब्रह्मानन्देनसाधुनानिर्मितायाअस्याअमृतलहर्याःपाठंकुर्वतःफलप्राप्तिंदर्शयन्यत्नादेषापठनीयेतिप्रेरयति ॥ परस्येति ॥ यःसानंदोरजस्तमःकार्यविक्षेपलयाभावेनसहवर्तमानःपुरुषोभक्तेःपर

 मेश्वरानुरक्तेर्जननीमुत्पादयित्रीमानंदस्याब्धिःसमुद्रस्तस्यपरस्यपरमात्मनोऽमृतलहरीं नम्रियते 
ऽन्येत्यमृतासाचासौलहर्य्यूर्मिस्तामिमांग्रंथरूपांपरमेश्वरस्तुतिंपठति सपरमपुरुषंपरमात्मानंद्रा
 क्झटित्यनुभवन् योगिभिःप्राप्यांप्राप्तुंयोग्यांपरमांसर्वोत्कृष्टांगतिंकैवल्यरूपांयातिप्राप्नोत्यतःपरम
गतिहेतुत्वादयंमनुजोयत्नादाशुझटित्येनाममृतलहरींपठेदितियोजना ॥ १०४ ॥ अधुनाब्रह्मा
नंदाभिधःसाधुःस्वनिर्मिताममृतलहरींभगवद्भक्तेषुभगवतिचसमर्पयति ॥ इयमिति ॥ ब्रह्मानंदे

गतिं योगिप्राप्यां परमपुरुषं द्रागनुभवन्नतो यत्नादेनामयम-
भिपठेदाशु मनुजः ॥ १०४ ॥ इयं पीयूषलहरी ब्रह्मानंदेन
निर्मिता ॥ भक्ता आनन्दमायान्तु प्रीयतांविष्णुरेनया ॥
॥ १०५ ॥ ॥ इतिश्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मा-
नन्दविरचिताऽमृतलहरी समाप्तिमगात् ॥ ॥

ननिर्मितायेयंपीयूषलहरीतयापीयूषलहर्य्या भगवद्भक्ताआनंदमायांतुप्राप्नुवंतु ॥ विष्णुर्व्यापकः
परमात्माचैनयाप्रीयतां मयिप्रसन्नोभूयादित्यर्थः ॥ १०५ ॥ ॥ ममभवेद्गुरूणांपदकंजयोरि
हपरत्रगतिप्रदयोर्नतिः ॥ वसतियत्रविमुक्तिरहर्निशंतदुपमांकथयामिकथंगिरा ॥ १ ॥ सच्चिदा 
नंदरूपायभक्तानुग्रहकारिणे ॥ मायानिर्मितविश्वायमहेशायनमोनमः ॥ २ ॥ इतिश्रीमन्मौक्ति
करामोदासीनशिष्यब्रह्मानंदविरचिताऽमृतलहरीपदयोजनाटीकासमाप्ता ॥ ॥ ॥ ॥

इदं पुस्तकं 'कुवरजी मुरारजी तथा कानजी भीमजी' इत्येताभ्यां मिलित्वा श्रीमद्गुरुप-तिपदपरिभासित-शिष्य-स्वामिश्रीसंगतीदासाज्ञया मुम्बापुर्यां जगदीश्वराख्ये मुद्रणालये मुद्रापितम्। संवदब्दाः १९५१। शकाब्दाः १८१७।

ॐ श्रीगणेशायनमः ॥ ॥ सदाशुद्धोबुद्धः सकलमपिमायामयमिदं विसृज्यस्वासक्त्या प्रथयतियएनच्चितिमयम् ॥ कथंचिज्ज्ञातश्चेद्भवतिविलयंमोहरचितं नमामस्तंनित्यंसमरसघनात्मानममलम् ॥ १ ॥ वैनाशिकैर्महामूढैर्लुप्तंश्रुतिशिरोगणं ॥ आविश्चकारमेविज्ञस्तंवंदेहंयतीश्वरं ॥ २ ॥ श्रीमद्गुरून्नमस्कृत्यपार्वतीशंचमाधवं ॥ ब्रह्मानंदःकरोतीमामात्मबोधस्यदीपिकां ॥ ३ ॥ इहखलुमातेवपुत्रेषुदयालुर्भगवान्शंकराचार्यःउत्तमप्रज्ञानांशास्त्रपयोनिधिमवगाह्यात्मज्ञानरत्नमन्विष्यमाणानांकृतेशारीरकभाष्यादिप्रस्थानत्रयंनिर्मायतदवलोकनेऽसमर्थानांमंदबुद्धीनामनु

तपोभिः क्षीणपापानां शांतानांवीतरागिणाम् ॥
मुमुक्षूणामपेक्ष्योय मात्मबोधोविधीयते ॥ १ ॥

ग्रहार्थंसर्ववेदांतसारसंग्रहमात्मबोधाख्यंप्रकरणंविधित्सुः साधनचतुष्टयसंपन्नस्यैवात्राधिकारइतिसूचयन्मंगलंचसूचयन्प्रतिजानीते ॥ तपोभिरिति ॥ कृच्छ्रचांद्रायणनित्यनैमित्तिकोपासनाद्यनुष्ठानरूपतपस्याभिःक्षीणानिपापानिदुरितानियेषां नित्यनैमित्तिकैरेवकुर्वाणोदुरितक्षयमितिवचनात् यद्वेंद्रियाणांनिग्रहःपरमंतपइतिवचनाच्चक्षुरादींद्रियनिग्रहरूपैस्तपोभिःक्षीणानिपापानिरागद्वेषाद्यंतःकरणदोषलक्षणानियेषांतेतथोक्तास्तेषां अतएवशांतानामक्षुब्धाशयानां तदेताभ्यांतावद्विशेषणाभ्यांशमादिपद्संपत्तिःसूचिता ॥ वीतरागिणांइहामुत्रार्थफलभोगालिप्सूनां मुमुक्षूणांसंसारग्रंथिभेदनेकृताभिलाषाणां ॥ तदेताभ्यांविशेषणाभ्यांवैराग्यंमोक्षेच्छाचप्रदर्शिते ॥ नह्ये

ताद्दशीप्रवृत्तिर्विवेकंविनासंभवतीतिविवेकस्त्वर्थादागमिष्यतीतिसाधनचतुष्टयसंपन्नानांचतुरशी
तिलक्षयोनिभ्रमणलक्षणसंसारनिवर्तकात्मज्ञानजनकत्वेनावश्यमपेक्ष्योयमात्मबोधाख्योग्रंथो वि
धीयते । शंकरेणभगवताऽयमेवतेषामात्मबोधमुत्पाद्यमोक्षंकरिष्यतीतिक्रियतइत्यर्थः ॥ नन्वत्रा
॥ १ ॥ चार्येणमंगलस्याकृतत्वान्नास्तिकमतप्रवेशेनतस्यानवधेयवचनता स्यादितिचेन्न यत्रप्रपंचव्यव
स्थादिकंप्रतिपिपादयिषितमस्तितत्रैवमंगलस्यापेक्षितत्वेनास्यतुमंगलरूपत्वात् ॥ यद्वा सतपोत
प्यतसतपस्तप्त्वेमांल्लोकानसृजदितिश्रुत्यातपसःसर्वोत्कृष्टत्वेनादौतत्स्मरणस्यैवमंगलत्वादिति

**बोधोऽन्यसाधनेभ्योहि साक्षान्मोक्षैकसाधनं ॥**
**पाकस्यवह्निवज्ज्ञानं विनामोक्षोनसिद्ध्यति ॥ २ ॥**

ध्येयम् ॥ १ ॥ ननुतपोमंत्रकर्मयोगाद्यनेकविधसाधनेषुसत्सुमोक्षंप्रत्यात्मबोधएवकिमितिसाध
नत्वेनप्रतिपाद्यतेइत्याशंक्यतस्यैवसाक्षान्मुक्तिसाधनत्वस्यश्रुतिप्रतिपाद्यत्वेनप्रमाणसिद्धत्वादि
तिसदृष्टांतमाह ॥ बोधइति ॥ तपोमंत्रकर्मयोगादिकानियानिसाधनानितानितुचित्तशुद्धित
दैकाग्र्यादिलक्षणपरंपरयात्मज्ञानद्वारामोक्षसाधकानिभवंतिबोधस्तुतानिसाधनानिविहायसाक्षा
तद्द्वारांतरंविनैवमोक्षस्यैकंमुख्यंसाधनं ॥ एतदेवदृष्टांतेनद्रढयति ॥ पाकस्यवह्निवदिति ॥ यथा ॥ १ ॥
लोकेकाष्ठजलादिषुपचनक्रियासाधनेषुसत्स्वपिवह्निंविनापाकोऽपक्वांशस्यनाशोनसंभवतितद्व
त् ॥ ज्ञानादेवतुकैवल्यं ऋतेज्ञानान्नमुक्तिः ज्ञात्वादेवंसर्वपाशापहानिःयदाचर्मवदाकाशंवेष्टयि

ष्यंतिमानवास्तदादेवमविज्ञायदुःखस्यांतोभविष्यतीत्यादिश्रुत्याज्ञानंविनामोक्षोननिष्पद्यतइत्य
र्थः ॥२॥ ननुकर्मणैवहिसंसिद्धिमास्थिताजनकादयइतिस्मृत्या कर्मणांविचित्रशक्तिमत्वेनचकस्य
चित्कर्मणएवाज्ञाननाशद्वारामुक्तिजनकत्वसंभवात्कृतंज्ञानेनेत्याशंक्यसंसिद्धिशब्दस्यांतः करण
शुद्धिपरत्वेनकर्माज्ञानयोर्विरोधाभावाच्चमैवमित्याह॥अविरोधितयेति॥कर्माज्ञानयोर्विरोधाभावा
त्कर्माविद्यांनिवर्तयितुंनोत्सहते॥तस्मान्नित्यशुद्धबुद्धमुक्तरूपंब्रह्मैवाहमस्मीत्येवंरूपा विद्याब्रह्मा
त्मैक्यज्ञानमेवाविद्यांस्थूलोहंकाणोहंक्षुधितोहंसंकल्पवानहमध्यवसायवानहंमूढोहमित्यादिरूप

अविरोधितयाकर्म नाविद्यांविनिवर्त्तयेत् ॥ विद्याऽविद्यांनिहं-
त्येव तेजस्तिमिरसंघवत् ॥ ३ ॥ परिच्छिन्नइवाज्ञानात्तन्नाशे
सतिकेवलः ॥ स्वयंप्रकाशतेह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥

मज्ञानंनिःशेषंहंतिविनाशयति तस्यवस्तुविषयकत्वेनबलिष्ठत्वात् ॥ तदुक्तंभगवता ज्ञानेनतुतदज्ञा
नंयेषांनाशितमात्मनः॥ तेषामादित्यवज्ज्ञानंप्रकाशयतितत्परमिति॥विरोधितयाविद्यायाएवावि
द्यानिवर्तकत्वमित्यत्र योग्यंदृष्टांतमाह ॥ तेजस्तिमिरसंघवदिति ॥ यथातेजःसूर्यादीनांप्रकाशोज्झ
टित्येवतिमिरस्यांधकारस्यसंघंसमूहंविनाशयतितद्वदित्यर्थः॥३॥ ननुप्रतिशरीरमात्मनःपरिच्छिन्न
त्वेनोपलभ्यमानत्वात्कथंब्रह्मात्मैक्यज्ञानेनाज्ञाननिवृत्तिरित्याशंक्याज्ञानादेवहिपरिच्छिन्नइवभास
तेतन्नाशेत्वपरिच्छिन्नएवस्वयंद्योततइत्याह॥ परिच्छिन्नइवेति॥ परिपूर्णाद्वितीयस्यात्मनोऽज्ञानपरिक

ल्पितदेवमनुष्याद्युच्चावचशरीराध्यासकृतमेवपरिछिन्नत्वमतस्तत्त्वमस्यादिमहावाक्यैर्ब्रह्मात्मैक्य ज्ञानेनाज्ञानतत्कृताध्यासनाशेसत्यात्माकेवलः सजातीयविजातीयस्वगतभेदशून्यःसन्स्वयंप्रका शतेहीतिप्रसिद्धंवेदे॥तदात्मानमेवावेदाहंब्रह्मास्मीति अत्रैवदृष्टांतमाह॥मेघापायेंऽशुमानिवेति मे घकृतावरणनाशेसतियथासूर्यःस्वयमेवप्रकाशतेतद्वदित्यर्थः ॥४॥ नन्वज्ञाननाशेआत्मनः केवल त्वंयत्प्रतिपाद्यतेतन्नसंभवत्यज्ञाननाशकवृत्तिज्ञानेनद्वैतापत्तेरितिचेत्तत्राह॥अज्ञानेति॥ज्ञानंअकर्तृ भोक्तृसच्चिदानंदरूपंब्रह्माहमस्मीत्याकारकोबोधः।ज्ञानस्यस्वस्यैवाभ्यासात्दीर्घकालनैरंतर्यसत्का

अज्ञानकलुषंजीवं ज्ञानाभ्यासाद्विनिर्मलं ॥ कृत्वाज्ञानंस्वयं
नश्येज्जलंकतकरेणुवत् ॥ ५ ॥ संसारःस्वप्नतुल्योहि रागद्वे-
षादिसंकुलः ॥ स्वकालेसत्यवद्भाति प्रबोधेऽसत्यवद्भवेत् ॥६॥

रपूर्वकसेवनात् अज्ञानकार्यभूतेनाहमादिनाकलुषीकृतंकर्तृत्वभोक्तृत्वाद्यभिमानिनंजीवंविशेषे णनिर्मलंकृत्वाऔपाधिककर्तृत्वादिप्रहाणेनपूर्वसिद्धासंगाद्वितीयत्वंप्रतिपाद्यस्वयमपिनश्येदतो नानेनात्मनःकेवलत्वहानिः॥ अत्रानुकूलंदृष्टांतमप्याह॥ कतकरेणुवदिति॥ यथाकतकरजआवि लंजलंनिर्मलंकृत्वास्वयमपिनश्यतितद्वदित्यर्थः ॥ ५ ॥ नन्वपरोक्षतयानुभूयमानस्यसंसारस्यस त्यत्वात्कथमात्मनः केवलत्वमित्याशंक्य । स्वप्नदृष्टांतेनास्यमिथ्यात्वंसाधयति ॥ संसारइति ॥ रागद्वेषादिभिःसंकुलोव्याप्तोऽयंसंसारःस्वप्नतुल्यः ॥ तत्तुल्यत्वमेव साधयति ॥ स्वकालइति ॥

यथास्वाप्नपदार्थोनिद्राकालेसत्यवद्भातिजाग्रतिचासत्योभवति तथाऽयंसंसारोऽप्यज्ञानकालेसत्यव द्भातिप्रबोधेतत्त्वमस्यादिमहावाक्यश्रवणादात्मज्ञानोत्पत्तावसत्यवद्भवेदतोनात्मनःकेवलत्वहानि रित्यर्थः ॥ ६ ॥ स्वाधिष्ठानभूतब्रह्मज्ञानपर्यंतमेवकल्पितस्यजगतःसत्वमितिसदृष्टांतमाह ॥ ता वदिति ॥ यावन्नीलपृष्ठत्रिकोणादिविशिष्टाशुक्तिर्नज्ञायतेतावत्तत्रकल्पितंरजतंसत्यवत्प्रतीयते ॥ तद्वत्सच्चिदानंदाद्वयंब्रह्मयावन्नज्ञायतेसाक्षान्नानुभूयते तावन्मिथ्याभूतोऽपिप्रपंचःसत्यवद्भ्रांत्याद्द श्यतइत्यर्थः ॥ ७ ॥ सर्वोऽपिप्रपंचःब्रह्मणिकल्पितइत्येतदेव दृष्टांतांतरेणद्रढयति ॥ सच्चिदिति ॥

तावत्सत्यंजगद्भाति शुक्तिकारजतंयथा ॥ यावन्नज्ञायतेब्र-
म्हसर्वाधिष्ठानमद्वयम् ॥ ७ ॥ सच्चिदात्मन्यनुस्यूतेनित्येवि-
ष्णौ प्रकल्पिताः ॥ व्यक्तयोविविधाः सर्वा हाटकेकटकादि-
वत् ॥ ८ ॥ यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ॥

अस्तिभातिप्रियरूपात्मन्यतएवनामरूपात्मकेजगत्यनुस्यूतेऽनुगतेऽनुगतत्वादेवनित्येत्रिकाला बाध्येविष्णौव्यापकेब्रह्मणिसर्वोपादानभूते सर्वाश्चतुरशीतिलक्षयोनिलक्षणाविविधाःअवयवसं स्थानसंस्थयानानाविधाःव्यक्तयःहाटकेसुवर्णेकटककुंडलादिवत्प्रकल्पिताःमिथ्याभूताइत्यर्थः । तदनन्यत्वमारंभणशब्दादिभ्यइतिन्यायात् । वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमित्या दिश्रुतेश्च ॥ ८ ॥ ननुप्रपंचस्यमिथ्यात्वेपि जीवभेदस्यसत्यत्वात्कथंप्रपंचाधिष्ठानरूपस्य परमा

त्मनोऽद्वितीयत्वमित्याशंक्यौपाधिकभेदेऽपिवस्तुतोऽद्वितीयत्वमेवेतिसदृष्टांतमाह ॥ यथाकाश इति ॥ यथाविभुरप्याकाशो घटमठादिरूपनानोपाधिगतःसंस्तस्योपाधेर्भेदात् घटाकाशोमठा काशइतिभिन्नवद्भाति तद्वद्विभुरपिहृषीकेशः सर्वेंद्रियप्रवर्तकोंऽतःकरणादिरूपोपाधिष्ववच्छिन्नत

॥ ३ ॥ याप्रतिबिंबतयावागतःप्राप्तःसंस्तस्योपाधेर्भेदाद्भिन्नवद्भाति तस्योपाधेर्नाशादेकवद्भवेत् ॥ यथा घटमठाद्युपाधीनांविनाशे एकोमहाकाशएवभवति तद्वदित्यर्थः ॥ एकोदेवः सर्वभूतेषुगूढःसर्व व्यापीसर्वभूतांतरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलोनिर्गुणश्च॥एकःसन् बहुधा

तद्भेदाद्भिन्नवद्भाति तन्नाशादेकवद्भवेत् ॥ ९ ॥ नानोपाधिव-
शादेव जातिवर्णाश्रमादयः ॥ आत्मन्यारोपितास्तोये रसव-
र्णादिभेदवत् ॥ १० ॥

विचचार एकंसंतंबहुधाकल्पयंति एकधैवानुद्रष्टव्यं नेहनानास्तिकिंचन एकमेवाद्वितीयंब्रह्म ॥ एकएवहिभूतात्मा भूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत् ॥ अविभक्तंचभूते ष्ुविभक्तमिवचस्थितमित्यादिश्रुतिस्मृतिभिस्तात्पर्यतयात्मनोऽसंगाद्वितीयत्वप्रतिपादनाज्जी वभेदस्यौपाधिकत्वेनमिथ्यात्वमितिभावः ॥ ९ ॥ ननुब्राह्मणोऽहं ब्रह्मचार्यहं संन्यस्तोहमित्या ॥३॥
दिजातिवर्णाश्रमादिभिर्धर्मैर्युक्तस्यात्मनः कथमसंगाद्वितीयत्वमित्याशंक्य तद्धर्माणामपितत्रौ पाधिकत्वात् वस्तुतस्तत्त्वमित्याह ॥ नानोपाधीति ॥ पूर्वोक्तदेहाद्यनेकोपाधिकृततादात्म्याध्या

सादेव तद्धर्माजातिवर्णाश्रमादयआत्मन्यारोपिताअविद्याकल्पिताः नतु स्वतः तथात्वेसुषुप्ताव
प्यात्मनिभासेरन् ॥ वक्ष्यतिच देहेंद्रियगुणान्कर्माण्यमलेसच्चिदात्मनि अध्यस्यंत्यविवेकेनगग
नेनीलतादिवदिति ॥ देहादीनांधर्माएवाविवेकादात्मनिभासंतइत्यत्रदृष्टांतमाह ॥ तोयेरसव
र्णादिभेदवदिति ॥ यथास्वभावान्मधुरमपिजलंकटुकषायलवणाम्लरक्तपीतादिद्रव्योपेतंसतत्
तद्रूपंभवति नतुस्वरूपेणतद्वदित्यर्थः ॥ १० ॥ अविद्यापरिकल्पितस्थूलशरीराद्युपाधित्रितया
दात्मानंविविच्यान्मुमुक्षुरित्युपाधित्रयस्वरूपंदर्शयति ॥ पंचीकृतेत्यादिसार्द्धद्वाभ्यां ॥ तत्रता

पंचीकृतमहाभूतसंभवं कर्मसंचितं ॥ शरीरं सुखदुःखानां
भोगायतनमुच्यते ॥ ११ ॥ पंचप्राणमनोबुद्धिदशेंद्रियसम-
न्वितं ॥ अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥ १२ ॥

वत्स्थूलशरीरोपाधिमाह ॥ पंचीकृतेति ॥ पंचानांभूतानांप्रत्येकंद्विधाविभज्य तत्रार्द्धपंचकंप्र
स्थाप्य परार्द्धपंचकेएकैकंचतुर्द्धाविभज्य तस्मिन्प्रस्थापितेऽर्द्धपंचके स्वस्वांशंपरित्यज्य तत्रैवच
तुर्द्धाविभक्तानामेकैकस्ययोजनंपंचीकरणं ॥ एवमपंचपंचसंपद्यंतइतिपंचीकृतानियानिपृथिव्या
दिमहाभूतानि तेभ्यउपादानकारणेभ्यः संभवउत्पत्तिर्यस्यतत्प्रारब्धकर्मभिःसंचितंरचितंप्रत्यगा
त्मनःसुखदुःखानामायतनंभोगस्थानंयत्तच्छरीरंस्थूलशरीरमित्यर्थः ॥ ११ ॥ अथसूक्ष्मशरीरो
पाधिमाह ॥ पंचेति ॥ पंचप्राणाःप्राणापानव्यानोदानसमानाख्याः । मनःसंकल्पविकल्पा

त्मिकांतःकरणवृत्तिः । बुद्धिर्निश्चयात्मिकातद्वृत्तिः । दशेंद्रियाणिश्रोत्रत्वक्चक्षुर्जिव्हाघ्राणाख्यानिज्ञानेंद्रियाणिपंच वाक्पाणिपादपायूपस्थाख्यानिकर्मेन्द्रियाणिपंचच ॥ तैर्मिलित्वासप्तदशभिरवयवैःसमन्वितंयुक्तंअपंचीकृतेभ्यःसूक्ष्मभूतेभ्यउपादानकारणेभ्यउत्थंजातंप्रत्यगात्मनःसुखदुःखभोगस्यसाधनंयत्तत्सूक्ष्मांगंलिंगशरीरमित्यर्थः ॥ १२ ॥ अथतृतीयंकारणशरीरोपाधिमाह ॥ अनादीत्यर्द्धेन ॥ अनिर्वाच्या तत्त्वज्ञाननिवर्त्यत्वाज्जगत्सर्जनाच्चसदसद्भ्यांवक्तुमयोग्या याऽनाद्यविद्या सासमष्टिव्यष्टिभेदेनस्थूलसूक्ष्मप्रपंचयोर्जनकत्वात्कारणोपाधिरुच्यतइत्यर्थः ॥उपाधि

अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते ॥ उपाधित्रित-
यादन्यमात्मानमवधारयेत् ॥ १३ ॥ पंचकोशादियोगेन तत्त-
न्मय इव स्थितः ॥ शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा १४

त्रयनिरूपणस्यप्रयोजनमाह ॥ उपाधीति ॥ उक्तस्थूलशरीराद्युपाधित्रितयादन्यंतत्साक्षिणमात्मानमवधारयेत् उपाधित्रितयविलक्षणः सच्चिदानंदरूपोऽहमस्मीतिनिश्चित्यजानीयादित्यर्थः ॥ ॥ १३ ॥ ननूपाधित्रितयविलक्षणसच्चिदानंदरूपत्वमात्मनोनसंभवत्यन्नमयादिरूपतयाप्रतीतेः ॥ सवाएषपुरुषोऽन्नरसमयइत्यादिश्रुत्या तन्मयतयाप्रतिपादनाच्चेत्याशंक्यात्मन्यन्नमयादिरूपेण या प्रतीतिः सा तत्तादात्म्याध्यासादितिसदृष्टांतमाह ॥ पंचकोशेति ॥ अन्नरसेनैवभूत्वा तेनैवाभिवृद्धिंप्राप्यान्नरूपपृथिव्यांयद्विलीयतेतदन्नमयः ॥ प्राणादिपंचवायवः वागादिपंचकर्मेंद्रिया

णिच मिलित्वाप्राणमयः ॥ मनश्चक्षुरादिज्ञानेंद्रियपंचकंचमिलित्वामनोमयः ॥ बुद्धिर्ज्ञानेंद्रिय पंचकंचमिलित्वाविज्ञानमयः ॥ कारणशरीरभूताविद्यामलिनसत्वं प्रियादिवृत्तिसहितंसतआनं दमय इत्येतेऽन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाःपंचकोशाः शुद्धसच्चिदानंदरूपस्यात्म नआच्छादकत्वात् ॥ आदिपदेनस्थूलत्वकृशत्वक्षुधापिपासादयस्तद्धर्माःग्राह्यास्तेषांयोगेनमि ध्यातादात्म्येनवस्तुतःशुद्धोऽप्यात्मा तत्तन्मयइव मनुष्योऽहं स्थूलोऽहं क्षुधितोऽहं संदिग्धोऽहं निश्चयवानज्ञश्चास्मीति तत्तदन्नमयादिरूपतयामिथ्यैवस्थितइत्येवंप्रतीयते नतुवस्तुतस्तत्तद्रूपइ

वपुस्तुषादिभिःकोशैर्युक्तंयुक्त्यावघाततः ॥
आत्मानमांतरं शुद्धं विविच्यात्तंदुलं यथा ॥ १५ ॥

तीवशब्दार्थः ॥ सवाएपइत्यादिवेदस्त्वरुंधतीन्यायेनसूक्ष्मवस्तुप्रदर्शयन्नुपाधिस्थंपुरुषंसूचयति नत्वन्नमयपुरुषत्वेतात्पर्यवान्॥ एतदेवदृष्टांतेनद्रढयति॥ यथास्वभावतःशुक्लएवस्फटिको नीलपीत वस्त्रादियोगेन तत्तन्मयइवाभाति नतुवस्तुतोनीलपीतादिरूपस्तद्वदित्यर्थः ॥ १४ ॥ तादात्म्या ध्यासेनान्नमयादिरूपतयास्थितस्यात्मनस्तेभ्योविवेचनंकुर्यादितिसदृष्टांतमाह ॥ वपुस्तुषादिभि रिति ॥ तंदुलस्यस्वरूपतयाप्रतीयमानतुषादिभिर्युक्तंतंदुलंयथाऽवघाततोमुसलावहननेनशुद्धं विविच्यतेपृथक्क्रियते ॥ तथा कोशैरन्नमयादिभिर्युक्तंतेषामभ्यंतरंशुद्धमात्मानंविविच्यात्तेभ्यः पृथक्कृत्यविजानीयादित्यर्थः ॥ विवेचनप्रकारस्तुअयमन्नमयो नात्मा भौतिकत्वात् घटादिवत्

अन्यथाकृतनाशाकृताभ्यागमप्रसंगात् ॥ प्राणमयोऽपि नात्मा भौतिकत्वाज्जडत्वाच्च ॥ मनोमयोऽपि नात्मा करणत्वाद्धास्यादिवत् ॥ विज्ञानमयोऽपि नात्मा परिणामित्वाद्दुग्धादिवत् ॥ आनंदमयोऽप्यनात्मा जडत्वाद्घटादिवत् ॥ कुंडलकटकादिवन्मदीयत्वेनप्रतीयमानत्वादनात्मत्वमेतेषांस्फुटमेवेति तेभ्योविलक्षणःप्रत्यगात्मा परमात्मैव सच्चिदानंदैकलक्षणलक्षितत्वादिति ॥ ॥ १५ ॥ नन्वात्मनोब्रह्मरूपत्वेन सदासर्वगतत्वात्किमितिससर्वत्रनभासतइतितत्राह ॥सदेति॥ आत्मासर्वगतोऽपिसर्वत्रव्याप्यस्थितोऽपि न सर्वत्रावभासते । अस्तिभातिप्रियरूपेणसदासर्वत्र

सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते ॥ बुद्धावेवावभासेत
स्वच्छेषु प्रतिबिंबवत् ॥ १६ ॥ देहेंद्रियमनोबुद्धिप्रकृतिभ्यो
विलक्षणं ॥ तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥

घटपटादिषुभासमानत्वेऽप्यनुभवितृत्वलक्षणविशेषरूपेणबुद्धावेवावभासेत तस्याःसत्वगुणकार्यत्वेनस्वच्छत्वात् ॥ एतदेवदृष्टांतेनस्पष्टयति ॥ स्वच्छेषुप्रतिबिंबवदिति ॥ यथाशरीरादिवस्तूनांछायाप्रतिभासस्यसूर्यादीनामातपस्यचसामान्यतः सर्वत्रप्रतीयमानत्वेऽपितेषांविशेषाकारप्रतिबिंबंतुजलदर्पणादिस्वच्छेष्वेवदृश्यते नत्वन्यत्र तद्वदित्यर्थः ॥ १६ ॥ अधुनादेहेंद्रियादिसंघातेवर्तमानस्याप्यात्मनस्तद्वैलक्षण्यंराजदृष्टांतेनदर्शयति ॥ देहेति ॥ देहेंद्रियादिसंघातेवर्तमानमात्मानंदेहेंद्रियमनोबुद्धिप्रकृतिभ्योजडपरिणामीदृश्येभ्योविलक्षणंचैतन्यापरिणाम्यदृश्यरूपं

तेषांदेहादीनांया वृत्तयः बाल्याद्यवस्थादेहवृत्तयः रूपरसादिविषयाकाराश्चक्षुरादींद्रियवृत्तयः संकल्पविकल्पात्मिकामनोवृत्तयः अध्यवसायलक्षणाबुद्धिवृत्तयः आकाशाद्याकारपरिणामरूपाः प्रकृतिवृत्तयस्तासांसाक्षिणंचविद्याज्जानीयात् ॥ यथाराजासदसिसभ्यान्सर्वान्साक्षितयापश्यन् तेजस्वित्वादिनाविलक्षणएवावबुध्यते तद्वदित्यर्थः ॥ १७ ॥ नन्वात्मनःसाक्षित्वेनयज्ज्ञानंतन्नोपपद्यते संघातेव्यापारवत्तयाप्रतीतेरित्याशंक्यतत्रव्यापारवत्ताप्रतीतेर्भ्रांतित्वान्नैवमितिसदृष्टांतमाह ॥ व्यापृतेष्विति ॥ चक्षुरादींद्रियेषुस्वस्वविषयेव्यापारवत्सुसत्सुअविवेकिनांगुरुशास्त्राद्युप

व्यापृतेष्विंद्रियेष्वात्मा व्यापारीवाविवेकिनां ॥ दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥१८॥ आत्मचैतन्यमाश्रित्य देहेंद्रियमनोधियः ॥ स्वकीयार्थेषु वर्तंते सूर्यालोकं यथा जनाः॥१९॥

देशरहितानामात्माव्यापारीवदृश्यते नतुतत्वदृशां यथाऽभ्रेषुमेघखंडेषुवायुनाधावत्सुलौकिकैः शशीधावतीवदृश्यते नतुचंद्रोवस्तुतोधावति ॥ तद्वदात्माऽपिवस्तुतो न व्यापारवानित्यर्थः ॥ ॥ १८ ॥ ननुदेहेंद्रियादीनामेवचेद्व्यापारवत्वं तद्वत्वेनतेषांतर्हिचेतनत्वादात्मत्वं स्यादित्याशंक्यात्मचैतन्येनैवतेषांव्यापारवत्वं नतुस्वतइतिसदृष्टांतमाह ॥ आत्मचैतन्यमिति ॥ आत्मनो यच्चैतन्यंस्वरूपभूतं तदाश्रित्यदेहेंद्रियादयःस्वकीयार्थेषुवर्तन्ते यथा लौकिका जनाः सूर्यस्यालोकंप्रकाशमाश्रित्यस्वस्वव्यापारेप्रवर्तंतेतद्वत्तस्माद्देहेंद्रियादिषुस्वयंचेतनत्वाभावादात्मत्वंनसं

13

भवतीत्यर्थः ॥ १९ ॥ नन्वात्मनएवचैतन्यरूपत्वमस्तु परंत्वहंजातोऽहं मृतोऽहं कुमारोऽहं युवा
वृद्धश्च काणोऽहं बधिरोऽहं पश्यामि शृणोमि वच्मीत्याद्यनवरतमनुभूयमानत्वाज्जन्मादिमत्व
मपि स्यादित्याशंक्यदेहेंद्रियादिधर्माणांतेषामविवेकेनात्मन्यारोपितत्वान्नतद्धर्मत्वमितिसदृष्टांत
॥ ६ ॥ माह ॥ देहेंद्रियादिगुणानिति ॥ देहश्चेंद्रियाणिचतेषांगुणान्जन्मादिकाणत्वादिधर्मान् गमन
वचनादिकर्माणि चामलेऽज्ञानतत्कार्यमलरहिते सच्चिदात्मनिमूढाअविवेकेनारोपयंति ॥
यथानीरूपेगगने नीलतादिनातलं चाविवेकेनाध्यस्यंतितद्वदतो वस्तुतस्तेआत्मधर्मानसंति

**देहेंद्रियगुणान्कर्माण्यमलेसच्चिदात्मनि ॥ अध्यस्यंत्यविवेकेन गगने नीलतादिवत् ॥ २० ॥ अज्ञानान्मानसोपाधिः कर्तृत्वा-दीनि चात्मनि ॥ कल्प्यंतेऽम्बुगते चंद्रे चलनादि यथांऽभसः ॥ २१ ॥**

किंतुदेहादीनामेवेत्यर्थः ॥ २० ॥ ननुदेहेंद्रियादीनांधर्मा जन्मादय आत्मनिमाभवंतु परं
त्वहं कर्ताहं भोक्ता पुण्यवान् पापश्च सुखी दुःखीचास्मीतिसततंप्रतीतेर्वैशेषिकाभिमतः कर्तृ
भोक्त्रादिरूपएवात्मा स्यादित्याशंक्य कर्तृत्वादीनामंतःकरणधर्मत्वेनतत्तादात्म्याध्यासपूर्वकएव
तेषामारोपइतिसदृष्टांतमाह ॥ अज्ञानादिति ॥ मानसोपाधिस्तस्यैवकर्तृत्वादयोधर्माश्चाज्ञाना ॥ ६ ॥
दात्मतत्वाच्छादिकाविघातासच्चिदानंदरूपआत्मनिकल्प्यन्ते वैशेषिकादिभिर्मिथ्यैवाध्यस्यंते ॥
यथांऽभसोजलस्य चलनादितरलत्वमलिनत्वाधोदेशस्थत्वान्यंबुगते जलप्रतिफलिते चंद्रमस्य

विवेकिनोमिथ्यैवारोपयन्ति तद्वदात्मनीत्यर्थः ॥ २१ ॥ अंतःकरणधर्माएव रागेच्छादयआत्मनिकल्पिताइत्येतदेवान्वयव्यतिरेकयुक्तिप्रदर्शनेनद्रढयति ॥ रागेच्छासुखदुःखादीति ॥ रागोविशेषाभिलाषः इच्छासामान्याभिलाषः सुखंसर्वेषामनुकूलवेदनीयश्चित्तविकारः दुःखंप्रतिकूलवेदनीयश्चित्तविकारस्तान्येतानि आदौयस्यकर्तृत्वादेस्ततसर्वंजाग्रत्स्वप्नयोर्बुद्धौसत्यांप्रवर्तंते सुषुप्तौतस्याबुद्धेर्नाशेस्वकारणज्ञानलयेतद्रागादिकंनास्ति तस्माद्बुद्धेरेवरागादिधर्मजातमस्ति न

रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ॥ सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २२ ॥ प्रकाशोर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ॥ स्वभावः सच्चिदानंदनित्यनिर्मलतात्मनः ॥ २३ ॥ आत्मनःसच्चिदंशश्च बुद्धेर्वृत्तिरितिद्वयं ॥

त्वात्मनइत्यर्थः ॥ २२ ॥ ननुयद्यात्मा रागेच्छादिस्वभावो नास्ति तर्ह्यसौ कीदृक्स्वभावइति चेत्तत्स्वभावंदृष्टांतत्रयेणदर्शयति ॥ प्रकाशइति ॥ अर्कस्यसूर्यस्यप्रकाशोयथास्वभावःस्वरूपं तोयस्यजलस्यशैत्यंशीतलतायथास्वभावः अग्नेरुष्णतायथास्वभावस्तथाऽऽत्मनःसच्चिदानंदनित्यनिर्मलतास्वभावः संश्च चिच्चानंदश्च नित्यश्च निर्मलश्च तेषांभावस्तत्ता तत्स्वरूपइत्यर्थः ॥ ॥ २३ ॥ नन्वहं जानाम्यहं सुखीति ज्ञानसुखाद्याश्रयतयाऽऽत्मनःप्रतीतेः कथंनिर्विकारसच्चि

दानंदरूपत्वमित्याशंक्याह ॥ आत्मनइति ॥ प्रत्यगात्मनोयःसच्चिदंशःअंशइवांशस्तत्तद्वृत्तिष्वा
त्माभासः बुद्धेर्वृत्तिश्चज्ञानानंदांशावच्छेदिकेत्येतद्द्वयमविवेकेन संयोज्यासंगस्यात्मनः केनापि
संबंधस्याभावात् तथाऽप्यज्ञानवशान्मिथस्तादात्म्यंप्रतिविभाव्याहं जानाम्यहं सुखीत्यादिप्रत्य
॥७॥ यःप्रवर्ततेऽतः ज्ञानसुखाद्याकारवृत्तिरूपेण परिणता या बुद्धिस्तस्याएवतत्तदाकारज्ञानसुखाद्या
श्रयत्वं नत्वात्मनस्तस्य तदाश्रयतयाभानंतु बुद्धितादात्म्यादिति वस्तुतोनिर्विकारस्तच्चिदानं

संयोज्यचाविवेकेन जानामीति प्रवर्तते ॥ २४ ॥ आत्मनो
विक्रिया नास्ति बुद्धेर्बोधो न जात्विति ॥ जीवः सर्वमलं
ज्ञात्वा कर्त्ता द्रष्टेति मुह्यति ॥ २५ ॥

दरूपएवात्मेतिभावः ॥ २४ ॥ एतदेवविशदयति ॥ आत्मनइति ॥ जातु कदाचिदप्यात्मनो
विक्रियाविकारोनास्ति ॥ निर्गुणंनिष्क्रियंशांतंनिरवद्यंनिरंजनमितिश्रुतेः अव्यक्तोऽयमचिं
त्योऽयमविकार्योऽयमुच्यते इतिस्मृतेश्च बुद्धेस्तुकदाचिद्बोधोबोधशंकैव नास्ति प्रकृतिकार्यत्वे
नजडत्वात् तथाऽपिजीवोंऽतःकरणावच्छिन्नचेतनःसर्वंजडचेतनात्मकमलमत्यंताभेदेनज्ञात्वा मि ॥७॥
थ्याभिमत्याहं कर्त्ताहं द्रष्टेतिमुह्यतिभ्रान्तोभवति नतुविविक्त आत्मनिस्वल्पोऽपिविकार
इत्यर्थः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥

अधुनाऽऽत्मन्यन्यथाज्ञानस्यफलंदर्शयंस्तत्त्वज्ञानस्यापिफलंदर्शयति ॥ रज्जुसर्पवदिति ॥ यथा महांधकारेविकाररहितरज्ज्वादौ सर्पाद्यारोपणंकृत्वाभयंप्राप्नोतिपुमान् एवमात्माप्यात्मानंजीवंस द्वितीयंपरिच्छिन्नंसंसारिणंज्ञात्वामिथ्यैवनिश्चित्यभयंनाना विधसांसारिकपीडानिमित्तंवहेत्प्राप्नु यात् ॥ द्वितीयाद्वैभयंभवति उदरमंतरंकुरुतेऽथतस्यभयंभवति नचेदिहावेदीन्महतीविनष्टिरित्या दिश्रुतेः॥ ईषदप्यंतरंकृत्वारौरवंनरकंव्रजेदित्यादिस्मृतेश्चचेद्यदि नाहं जीवोऽखंडाद्वितीयसच्चिदा

रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ॥ नाहं जीवः परा-
त्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ २६ ॥ आत्माऽवभासयत्येको
बुद्ध्यादीनिंद्रियाणिच ॥ दीपो घटादिवत्स्वात्मा जडैस्तैर्ना-
वभास्यते ॥ २७ ॥

नंदरूपपरमात्माहमिति तत्त्वमस्यादिमहावाक्यैरात्मा ज्ञातो ज्ञानविषयोजातस्तदा निर्भयोभ वेत् ॥ ज्ञात्वादेवंसर्वपाशापहानिःक्षीणैःक्लेशैर्जन्ममृत्युप्रहाणिः इहचेदवेदीदथसत्यमस्ति ब्रह्मवेद ब्रह्मैवभवतियदाचर्मवदाकाशंवेष्टयिष्यंतिमानवास्तदादेवमविज्ञायदुःखस्यांतोभविष्यतीत्यादिश्रु तेः ज्ञात्वामांशांतिमृच्छतीत्यादिस्मृतेश्च ॥ २६ ॥ अथात्मा स्वकीयप्रकाशेनबुद्ध्यादीन्प्रकाश यंस्तैर्नप्रकाश्यतइतिस्वप्रकाशाद्वितीयत्वमात्मनइतिसदृष्टांतमाह ॥ आत्मेति ॥ आत्माबुद्ध्या

 

दीनिबुद्धिमनश्चित्तानि चक्षुरादींद्रियाणिच भासयतिप्रकाशयति ॥ ननुप्रतिसंघातबुद्ध्यादी
नांप्रतिसंघातमेकैकआत्माप्रकाशकः उत सर्वसंघातवर्तिबुद्ध्यादीनामेकएवात्माप्रकाशकःनाद्यः
एकमेवाद्वितीयंब्रह्म एकएवहिभूतात्माभूतेभूतेव्यवस्थितः एकोदेवःसर्वभूतेषुगूढइत्यादिश्रुतिवि
 रोधादद्वैतव्याघाताच्च ॥ द्वितीयेतुश्रुतिविरोधाभावेऽपिदेवदत्तसुखदुःखादीन्यज्ञदत्तोऽनुभवेत् य
ज्ञदत्तस्यतान्देवदत्तः ॥ उभयत्रात्मनएकत्वादित्याशंक्यात्मानंविशिनष्टि ॥ एकइति ॥ प्रतिसं
घातमेकोऽद्वितीयएवात्मासर्वसंघातवर्तिबुद्ध्यादीन्प्रकाशयति यथाएकएवदीपोघटादिवस्तुजा
तं ॥ अयंभावः यथायद्यपिएकएवदीपस्यसूर्यस्यवाप्रकाशस्तथाऽपियोघटाकारतयाघटंव्याप्य
स्थितःसघटमेवप्रकाशयति नतुपटं यश्चपटाकारतयापटावच्छिन्नःसपटमेव नघटमपि ॥ य
थावासर्वावकाशप्रदएकएवमहाकाशः परंतुसएवघटावच्छिन्नोयद्वस्तुधारयति तत्कुशूलावच्छि
न्नेनगगनेन नध्रियते यत्कुशूलावच्छिन्नोधारयति तद्घटावच्छिन्नेननध्रियते ॥ तथासर्व
संघातेष्वेकएवात्मासर्वसंघातवर्तिबुद्ध्यादीन्प्रकाशयंस्तत्तदवच्छिन्नएवतान्प्रकाशयति ॥ अ
तोनदेवदत्तयज्ञदत्तयोःपरस्परंसुखदुःखाद्यनुभवः ॥ उपाध्यविवक्षायांतुसूर्यादिवत्सर्वान्सपरमा
त्मैवप्रकाशयतीति ॥ यथाचदीपस्तैर्घटादिभिर्नावभास्यतेप्रकाश्यते तद्वत्स्वात्मात्वेषांबु
द्ध्यादीनामधिष्ठानभूतआत्माऽपिजडैस्तैर्बुद्धींद्रियादिभिर्नप्रकाश्यतेभास्यैर्भासकभासनायोगा 
दित्यर्थः ॥ २७ ॥ ॥ ॥ ॥ ॥

नन्वात्मा बुद्ध्यादिभिर्यदि नावभास्यतेतर्हि तस्यभानं केन स्वेनैवचेत्तदाऽऽत्माश्रयः ज्ञानांतरेणचेत्तदा ज्ञानानवस्थेत्याशंक्य स्वप्रकाशत्वात्स्वेनैव स्वस्यस्फुरणमितिसदृष्टांतमाह ॥ स्वबोध इति ॥ स्वस्यात्मनोबोधेस्फुरणेऽन्यज्ञानाकांक्षानास्ति आत्मनोबोधरूपतया ज्ञानरूपत्वात् ॥ यथादीपस्यस्वप्रकाशनेदीपांतरापेक्षानास्ति तद्वत्स्वात्मा स्वयमेवप्रकाशते ॥ नहिलोकेदीपस्यस्वप्रकाशनेआत्माश्रयइतिभावः ॥ २८ ॥ ननु यद्यात्मनःस्वतएवस्फुरणंतर्ह्ययत्नतएवसर्वेमुक्ताःस्युरात्मज्ञानस्यसदाविद्यमानत्वादित्याशंक्यात्मचैतन्यरूपं सामान्यज्ञानं नमुक्तिसाधनमपितु महावाक्यजन्यं यद्ब्रह्मात्मैक्यज्ञानं तदेवमुक्तिसाधनमिति तदेवसंपादयेदित्याह ॥

स्वबोधे नामबोधेच्छा बोधरूपतयात्मनः ॥ न दीपस्यान्यदीपेच्छा यथा स्वात्मा प्रकाशते ॥ २८ ॥ निषिध्य निखिलोपाधीन्नेतिनेती-तिवाक्यतः ॥ विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥ २९ ॥

निषिध्येति ॥ अथातआदेशोनेतिनेतीत्यतन्निरसनवेदवाक्यैर्निखिलोपाधीन्समष्टिव्यष्टिस्थूलसूक्ष्मरूपान्निषिध्यानात्मत्वेनपरित्यज्य संबंधत्रयसहितैस्तत्त्वमसि अयमात्माब्रह्म प्रज्ञानंब्रह्म अहंब्रह्मास्मीतिमहावाक्यैर्जीवात्मपरमात्मनो रैक्यंविद्यात्जानीयात् ॥ इदमेवमुक्तिसाधनंतत्त्वज्ञानमित्यर्थः ॥ संबंधत्रयंतु ॥ सामानाधिकरण्यंच विशेषणविशेष्यता लक्ष्यलक्षणभावश्चेति ॥ तत्रभिन्नप्रवृत्तिनिमित्तानांपदानामेकस्मिन्नर्थेप्रवृत्तिःसामानाधिकरण्यम् यथा सोयंदेवदत्तइत्यत्र

 

सइत्यस्य तद्देशकालवैशिष्ट्यप्रवृत्तिनिमित्तस्यायमित्यस्यैतद्देशकालवैशिष्ट्यप्रवृत्तिनिमित्तस्यचै कस्मिन्देवदत्तव्यक्तिमात्रेप्रवृत्तिःसामानाधिकरण्यं ॥ एवंतत्त्वमसीतिवाक्येऽपि परोक्षत्वादिवि शिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वंपदस्य चैकस्मिंश्चैतन्ये तात्पर्यसं
॥ ९ ॥ बंधः ॥ विशेषणविशेष्यताच यथासोयंदेवदत्तइत्यत्रैवसःकः अयं अयंकः सइतिपरस्परंभेदव्या वर्तकतयाविशेषणविशेष्यभावः ॥ एवं तत्त्वमसीत्यत्रापि तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वंपदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतयाविशेषणविशेष्यभावः ॥ लक्ष्य लक्षणभावश्च यथातत्रैवसोयंशब्दयोर्विशिष्टयोः सोयंशब्दार्थयोर्वालक्षणत्वंव्यक्तिमात्रस्यचलक्ष्य त्वं ॥ एवंतत्त्वमसीतिवाक्येऽपि तत्त्वंपदयोस्तदर्थयोर्वाविरुद्धपरोक्षत्वादिधर्मपरित्यागेनाविरुद्धा खंडचैतन्येनसहलक्ष्यलक्षणभावःसंबंधइति॥नन्वेवमपिलक्षणां विनामहावाक्यैः सविशेषणयोर्जी वात्मपरमात्मनो रैक्यज्ञानंनसंभवति। ततकथमुच्यते। तैस्तयोरैक्यंविद्यादितिचेत्तर्ह्यत्रका लक्षणा जहल्लक्षणावाऽजहल्लक्षणा वा जहदजहल्लक्षणा वा ॥ नाद्या यथागंगायांघोपइत्यत्र वाच्यार्थप्र वाहमशेषतःपरित्यज्य तत्संबंधिन्यर्थांतरतीरेवृत्तिस्संभवति । तद्वदिहजडाजडासंभेदात्मकस्या शेपवाच्यार्थस्यपरित्यागे तत्संबंधिनःपदार्थांतरस्यान्यस्यलक्षणीयस्याभावेन जहल्लक्षणायास्त स्याअसंसरणात् ॥ नापिद्वितीया यथाश्वेतोधावतीत्यत्रगुणवाचिनाश्वेतशब्देनतदाश्रयद्रव्यंस्व ॥ ९ ॥
वाच्यार्थगुणापरित्यागेनलक्ष्यते तथैवेहस्ववाच्यार्थापरित्यागेन तत्संबंधिनिवृत्तिरित्येवंलक्षणा यास्तस्याअजहत्स्वार्थायाअपिविरोधस्यतादवस्थ्येनासंभवात् ॥ तृतीया जहदजहल्लक्षणातु य

द्यपि सोयंदेवदत्तइत्यत्र यथातदेतद्देशकालवैशिष्ट्यांशपरित्यागेनोभयावस्थानुगतमखंडंदेवदत्त स्यपिंडमात्रंलक्ष्यते तद्वदत्राप्युभयोःपदार्थयोः समष्टिव्यष्टिसूक्ष्मस्थूलरूपवाक्यार्थविरोध्यंशपरि त्यागेनसर्वानुगतंचिन्मात्रंलक्षणयासमादायाखंडवाक्यार्थोबोध्यतेइतिसंभवति ॥ तथाऽप्यत्र तु साऽप्याचार्येण नाद्रियते । वाक्यार्थविरोधिनिखिलोपाधीनांनेतिनेतीतिवेदवाक्यैरेवनिषेधंवि धाय तदनुविविक्तयोरेवतत्त्वंपदार्थयोस्तत्त्वमस्यादिमहावाक्यैरभेदस्योपदेशात् ॥ यत्त्वत्रटीका कारेणलक्षणयामहावाक्यैरैक्यंविद्यादित्युक्तं तत्त्वापाततइतिध्येयम् ॥ २९ ॥ नन्वतन्निरसनाभा वे काक्षतिरित्याशंक्यातन्निरसनाभावेऽखंडात्मा ज्ञातुमशक्यः । यथानायंसर्पइत्यारोपितस्यसर्प

आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरं ॥ एतद्विलक्षणं विद्या-
दहं ब्रम्हेति निर्मलम् ॥ ३० ॥ देहान्यत्वान्न मे जन्म जराका-
र्श्यलयादयः ॥ शब्दादिविषयैः संगो निरिंद्रियतया न च ॥ ३१ ॥

स्यापाकरणाभावे तदधिष्ठानरूपरज्जुज्ञानंनोत्पद्यते तद्वच्छरीराद्यनात्मनिरसनाभावेसच्चिदानं दरूपात्मा ज्ञातुंनशक्यते इत्याशयेनाह ॥ आविद्यकमिति ॥ देहेंद्रियादिसर्वंदृश्यंयतोऽविद्या कल्पितमतोबुद्बुदवत्क्षरंविनाशि तस्मादेतत्सर्वंनिरस्येतिशेषः । एतस्माद्विलक्षणंसच्चिदानंदरूपं निर्मलमविद्यातत्कार्यरहितंब्रह्माहमस्मीतिविद्यात्येनकृतकृत्योभवेदित्यर्थः ॥ तथाचोक्तंभगव ता यज्ज्ञात्वानपुनर्मोहमेवंयास्यसिपांडवेति ॥ ३० ॥ इदानींमहावाक्यजन्यस्यपूर्वोक्तब्रह्मात्मै

क्यज्ञानस्यदृढीकर्तुंस्वस्मिन्नेवतत्त्वज्ञानमननप्रकारमाह ॥ देहान्यत्वादितिषड्भिः ॥ स्थूलशरीर
धर्मा जन्मजराकार्श्यलयादयः मेमम नसंति नित्याजरामरापरिणामित्वेनदेहभिन्नत्वात् ॥ मम
शब्दादिविषयैः सहसंगोनच निरिंद्रियतयाइंद्रियेभ्योनिर्गतत्वाद्भिन्नत्वादित्यर्थः ॥ भौतिकाना
॥१०॥ मिंद्रियाणांभौतिकैर्विषयैःसहसंबंधोऽस्तु ममतुनित्यत्वेनासंगत्वेनचकेनापिवास्तवसंबंधोनास्ति
असंगोह्ययंपुरुषइतिश्रुतेरितिभावः ॥ ३१ ॥ मनोधर्मानप्यात्मनिनिषेधति ॥ अमनस्त्वादि
ति ॥ दुःखंच रागश्च द्वेषश्च भयंच तान्यादौयेषांकामसंकल्पविचिकित्साश्रद्धादीनांतेमनोध
र्मामेमम नसंति अमनस्त्वान्मनोभिन्नत्वात् ॥ तथाचश्रुतिः ॥ कामःसंकल्पोविचिकित्साश्रद्धा

**अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ॥ अप्राणो ह्यमनाः**
**शुभ्रो ह्यक्षरात्परतःपरः ॥ ३२ ॥**

ऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेति ॥ देहान्यत्वादित्यादिसार्द्धश्लोकोक्तदेहादीनां
जन्मादिधर्मनिषेधस्योपलक्षणत्वात् क्षुत्पिपासादयःप्राणधर्माअपिमयिनसंतीतिबोध्यम् । आ
त्मनोदेहेंद्रियादिभिन्नत्वेश्रुतिमपिप्रमाणयति ॥ अप्रमाणइत्यादिसार्द्धेन ॥ हियस्मान्मुख्यामु
ख्यप्राणभिन्नोऽहं तस्मात्क्षुत्पिपासाकाणत्वबधिरत्वादयस्तद्धर्मामयिनसंति ॥ यस्मान्मनोभि ॥१०॥
न्नोऽहं तस्माद्रागद्वेषादयस्तद्धर्मामयिनसंति ॥ शुभ्रइतिमलिनरूपस्थूलदेहभिन्नत्वेन जन्ममर
णादीनामात्मनिनिषेधः ॥ स्वकार्यवर्गात्परतोऽक्षरादव्यक्तात्परइत्यनेनमूढत्वादयोऽज्ञानधर्माम
यिनसंतीत्युक्तमित्यर्थः ॥ ३२ ॥

जन्यत्वेनानित्यत्वादनात्मत्वंप्राणादीनांसाधयति ॥ एतस्मादिति ॥ प्रत्यगभिन्नब्रह्मणःसकाशात् प्राणःक्रियाशक्तिः मनोऽन्तःकरणंज्ञानशक्तिः सर्वेन्द्रियाणिचज्ञानकर्मेन्द्रियाणि ॥ चशब्दाद्देहादिकमपि खंनभः वायुर्नभस्वान् ज्योतिरग्निः आपोजलानि पृथ्वीभूमिः विश्वस्यसर्वस्यस्थावरजंगमात्मकस्यप्राणिजातस्यधारिणीत्येतत्सर्वमनाद्यविद्यया जायतइत्यर्थः ॥ ३३ ॥ निर्गुणइति ॥ प्रकृतितद्विकारबुद्धिभिन्नत्वात्सत्वादिगुणैरागेच्छादिगुणैश्चशून्योऽहमस्मीतिसंबंधस्तदुक्तमत्रैव ॥ रागेच्छासुखदुःखादिबुद्धौसत्यांप्रवर्तते सुषुप्तौनास्तितन्नाशेतस्माद्बुद्धेस्तुनात्मन

एतस्माज्जायते प्राणो मनःसर्वेंद्रियाणि च ॥ खं वायुर्ज्योतिरापश्च
पृथ्वी विश्वस्यधारणी ॥३३॥ निर्गुणो निष्क्रियो नित्यो निर्विकल्पो
निरंजनः ॥ निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३४ ॥

इति ॥ निष्क्रियः देहेंद्रियादिक्रियारहितोऽहं देहेंद्रियादिभिन्नत्वात् ॥ अहंकरोमीत्यादिप्रतीतिस्तुदेहेंद्रियादिष्वात्मनस्तादात्म्याध्यासात् ॥ नित्योऽहंसर्वदैवचैतन्यैकरूपतयाप्रतीयमानत्वात् निर्विकल्पःसंकल्पविकल्पात्मकमनोभिन्नत्वात् ॥ निरंजनःमायातत्कार्यमलशून्यत्वात् ॥ अत एवनिर्विकारःविकृतानांमायातत्कार्याणांकल्पितत्वेनतेषामधिष्ठानत्वाच्च ॥ निराकारःआकाशवत्स्वतंत्रत्वेसतिनिरवयवत्वात् ॥ नित्यमुक्तःमोहादिबंधानांमयिकल्पितत्वेनवस्तुतोऽसंगत्वात् ॥ निर्मलःतमस्तत्कार्यमलरहितत्वात् ॥ ३४ ॥

 

नन्वेवंभूतेऽपित्वयिपरिच्छिन्नत्वंस्यादितिचेन्नेत्याह ॥ अहमिति ॥ सर्वंदृश्यजातंबहिरंतर्व्याप्य
यथाकाशःस्थितस्तथाऽहमपिप्रत्यक्चैतन्यरूपेणास्तिभातिप्रियरूपेणच सर्वंबहिरंतर्गतोऽस्मि ॥
तर्हिसर्वस्यविनाशेतवापिविनाशोभवेदिति तत्राह ॥ अच्युतइति ॥ सर्वस्यकल्पितत्वेनविना
॥११॥ शेऽपिममविनाशोनास्तिअधिष्ठानरूपत्वात् ॥ ननुतवाधिष्ठानरूपत्वेनविनाशाभावेऽप्यंतःकर
णादेःसत्ताचैतन्योभयप्रदत्वेनघटादेश्चसत्तामात्रप्रदत्वेनवैषम्यंस्यादितिचेत्तत्राह ॥ सदासर्वसम
इति ॥ अंतःकरणादीनांघटादेश्चसत्वतमः कार्यत्वेनवैषम्यतया वैषम्यप्रतीतिरस्तु नत्वात्मनिवै

अहमाकाशवत्सर्वं बहिरंतर्गतोऽच्युतः ॥ सदा सर्वसमः शुद्धो
निःसंगो निर्मलोऽचलः ॥ ३५ ॥ नित्यशुद्धविमुक्तैकमखंडानंद-
मद्वयं ॥ सत्यं ज्ञानमनंतं यत्परं ब्रम्हाहमेव तत् ॥ ३६ ॥

षम्यमित्यर्थः ॥ अतएवशुद्धःपुण्यापुण्यसंबंधरहितः ॥ निःसंगःकेनापिवास्तवसंबंधशून्यः ॥
अतएवनिर्मलःसंशयादिमलरहितः ॥ अतएवाचलःपरिपूर्णसच्चिदानंदस्वस्वरूपाच्चलितुमयोग्य
इत्यर्थः ॥ ३५ ॥ तदेवं प्रत्यगात्मनस्त्वंपदार्थस्य यादृशंलक्ष्यस्वरूपंवर्णितं तादृशमेवतत्पदार्थ
स्यब्रह्मणोलक्ष्यस्वरूपंवर्णयंस्तस्यस्वस्मिन्नभेदमप्यनुसंदधाति ॥ नित्येति ॥ नित्यंत्रिकालाबा ॥११॥
ध्यं शुद्धंअविद्यादिमलरहितं विमुक्तंसंसारवर्जितं एकंसजातीयभेदशून्यं अखंडंदेशकालवस्तुप
रिच्छेदशून्यं आनंदंसुखरूपं अद्वयंविजातीयस्वगतभेदशून्यं एवंविधंयत्परंब्रह्म ॥ सत्यंज्ञानमन

न्तम्ब्रह्मेतिश्रुत्याप्रतिपादितं तदेवाहमस्मीत्यर्थः ॥ ३६ ॥ एवंचिरकालाभ्यस्तमननेनदृढीभूतं ब्रह्मात्मैक्यज्ञानमविद्यातत्कार्यंसर्वंनिहंतीत्याह ॥ एवमिति ॥ एवंपूर्वोक्तेनप्रकारेण निरंतरंदीर्घकालसत्कारपूर्वकंमननंकृत्वा जातायाब्रह्मैवाहमस्मीतिवासना देहात्मज्ञानवद्ब्रह्मात्मैक्यज्ञानस्य दृढता साऽविद्यांतत्कृतचित्तविक्षेपांश्चहरतिनिःशेषेणनाशयति ॥ अत्रदृष्टांतो यथारसायनमौषधंसम्यक्सेवितंसत् रोगान्निःशेषेणनाशयति तद्वदिति ॥ ३७ ॥ अधुना ब्रह्मात्मैक्यभावनायां सा

एवं निरंतरं कृत्वा ब्रम्हैवास्मीति वासना ॥ हरत्यविद्यावि-
क्षेपान् रोगानिव रसायनम् ॥ ३७ ॥ विविक्तदेश आसीनो
विरागो विजितेंद्रियः ॥ भावयेदेकमात्मानं तमनंतमनन्य-
धीः ॥ ३८ ॥

धनान्याह ॥ विविक्तदेशइति ॥ जनसंबंधवर्जितदेशेआसीनःसुखमुपविष्टः विरागःशब्दादिविषयेविगताइच्छायस्यातएवविशेषेणजितानींद्रियाणियेनसोऽनन्यधीः ब्रह्मात्मन्येवतत्पराधीर्यस्यतथाभूतःसन्ननंतंदेशकालवस्तुपरिच्छेदशून्यंतंवेदशास्त्रप्रसिद्धमात्मानं यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह॥यच्चास्यसंततोभावस्तस्मादात्मेतिगीयतइतिनिरुक्तं ॥ एकंसर्वंवासुदेवोऽहंचेतिभावयेत्चिंतयेत् ॥ येनब्रह्मात्मैक्यनिश्चयःस्यादित्यर्थः ॥ ३८ ॥

नन्नु दृश्यप्रपंचेजाग्रति कथमेकत्वभावनासंभवेदिति तत्राह ॥ आत्मनीति ॥ सुधीःशुद्धांतःकर
णोऽधिकारी धियाविवेकवत्याबुद्ध्यासर्वंदृश्यंप्रविलाप्य ॥ तदनन्यत्वमारंभणशब्दादिभ्यः वा
चारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं पृथिव्यप्सुपयोवह्नौवह्निर्वायौनभस्यसौ ॥ नभश्चाव्या
॥१२॥ कृतेतच्चशुद्धेशुद्धोऽस्म्यहंहरिरिति ॥ न्यायघटितश्रुतिस्मृतिप्रतिपत्तिपूर्वकंप्रकर्षेणात्यंताभावंकृ
त्वासदाएकमखंडैकरसमात्मानंभावयेत् ॥ अत्रदृष्टांतः ॥ निर्मलाकाशवदिति ॥ यथाशरत्का
लेधूलिमेघाद्युपाध्यभावेस्वच्छएवाकाशोभवति तद्वदात्मानंस्वच्छैकरसंभावयेदित्यर्थः ॥ ३९ ॥

आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ॥ भावयेदेक-
मात्मानं निर्मलाकाशवत्सदा ॥ ३९ ॥ नामरूपादिकं सर्वं वि-
हाय परमार्थवित् ॥ परिपूर्णचिदानंदस्वरूपेणावतिष्ठते
॥ ४० ॥ ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ॥

नन्वखिलंदृश्यंविहायविद्वान्समाधौकेनरूपेणावतिष्ठतइतिचेत्तत्राह ॥ नामेति ॥ परमार्थतत्त्वमा
त्मानंविद्वान् नामरूपेआदीयस्यजातिव्यक्त्यादेस्तत्सर्वंविहायपरमार्थभूताधिष्ठानज्ञानेनबाधि
त्वा परिपूर्णचिदानंदस्वरूपंयदात्मतत्त्वं तेनस्वकीयपरमार्थरूपेणावतिष्ठतेनिवातदीपवन्नेंगते ॥ ॥१२॥
तदुक्तंभगवता ॥ यथादीपोनिवातस्थोनेंगतेसोपमास्मृता ॥ योगिनोयतचित्तस्ययुंजतोयोगमा
त्मनइति ॥ ४० ॥ नन्नु पृथिव्यादिदृश्यस्यलयेऽपिसमाधौज्ञातृज्ञानज्ञेयभेदरूपत्रिपुटीप्रपंचलक्ष

णपवनस्यविद्यमानत्वात्कथंनिवातदीपवत्स्वयमेवावतिष्ठतेइतिचेत्तत्राह ॥ ज्ञातृज्ञानेति ॥ सवि
कल्पसमाधिसमयेज्ञात्रादित्रिपुटीभेदःप्रतीयमानोऽपि निर्विकल्पसमाधिसमयेपरमात्मनिनविद्य
ते तस्यतदापरानंदैकरूपत्वात् ॥ तत्तस्मात्स्वयमेवदीप्यतेप्रकाशतइत्यर्थः ॥ ४१ ॥ एवं ब्रह्मा
त्मैक्यज्ञानायात्मध्यानादिप्रयत्नंकुर्वतःप्रत्यक्षफलमाह ॥ एवमिति ॥ पूर्वोक्तप्रकारेणआत्मांतः
करणमेवारणिरधःकाष्ठं प्रणवमेवोत्तरारणिस्तयोःप्रत्ययैकतानताध्यानमितिपतंजलिनोक्तध्यान

परानंदैकरूपत्वात् दीप्यते स्वयमेव तत् ॥४१॥ एवमात्मार-
णौ ध्यानमथने सर्वदाकृते ॥ उदितावगतिर्ज्वाला सर्वाज्ञा-
नेंधनं दहेत् ॥ ४२ ॥ अरुणेनेव बोधेन पूर्वं संतमसी हृते ॥
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४३ ॥

मेवमथनं तस्मिन्सर्वदादीर्घकालनिरंतरसत्कारपूर्वकंकृतेसति तत्रोदितायाऽवगतिरहंब्रह्मास्मीति
ज्ञानलक्षणाज्वाला सासर्वयदज्ञानतत्कार्यलक्षणमिंधनंतद्दहेत्भस्मसात्करोतीत्यर्थः ॥ तथाचश्रु
तिः ॥ आत्मानमरणिंकृत्वाप्रणवंचोत्तरारणिं ॥ ज्ञाननिर्मथनाभ्यासात्पाशंदहतिपंडितइति ॥
॥ ४२ ॥ अवगतिर्ज्वालासर्वाज्ञानेंधनंदहेदित्येतदेव दृष्टांतेनविवृण्वन्निरावरणस्यात्मनःप्रका
शमानत्वमपिसदृष्टांतमाह ॥ अरुणेनेवेति ॥ यथाऽरुणोदयप्रकाशेनादौनिबिडंतमोह्रियते तद्व
दहंब्रह्मास्मीतिज्ञानेनसम्यगज्ञानलक्षणेतमसिहृतेसति ततोंऽशुमान्सूर्यइवात्मा स्वयमेवाविर्भवे

न्निरावरणतयाप्राप्नुयादित्यर्थः ॥ तदुक्तंभगवता ॥ ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनः॥तेषामा
दित्यवज्ज्ञानंप्रकाशयतितत्परमिति ॥ ४३ ॥ ननु यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतिप्रमाणेनात्मनः
सततंप्राप्तत्वात्कथमज्ञाननाशेसतिप्राप्नुयादित्युच्यत इत्याशंक्याविद्ययैवाप्राप्तवत्तन्नाशेप्राप्तवद्भव
॥१३॥ तीति सदृष्टांतमाह ॥ आत्मात्विति ॥ तत्त्वज्ञदृष्ट्याऽऽत्मा सततंनिरंतरंयथास्यात्तथाप्राप्तोऽप्यज्ञा
निनस्त्वविद्ययाऽनाद्यज्ञानेनाप्राप्तवद्भासते श्रीगुरुकृपया तत्त्वमस्यादिमहावाक्यजन्यज्ञानेनत
स्याअविद्याया नाशेप्राप्तवद्भाति ॥ यथाकस्यचित्पुरुषस्यस्वकंठेप्राप्तमेवकण्ठाभरणमज्ञानेनाप्राप्त

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ॥ तन्नाशे प्राप्तवद्भा-
ति स्वकंठाभरणं यथा ॥४४॥ स्थाणौ पुरुषवद्भ्रांत्या कृता ब्रम्ह-
णि जीवता ॥ जीवस्य तात्विके रूपे तस्मिन् दृष्टे निवर्तते ॥ ४५ ॥

वत् तन्नाशेप्राप्तवद्भवति तद्वदात्माऽपीत्यर्थः ॥ ४४ ॥ ननु ॥ यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुत्या ब्र
ह्मणएवनित्यप्राप्तत्वमुक्तं नतुजीवात्मनइत्याशंक्याविद्याकृतभ्रांत्यैवपरमात्मनोजीवत्वं नतुवस्तु
तइतिसदृष्टांतमाह ॥ स्थाणाविति ॥ यथांधकारावृतेस्थाणौभ्रांत्यापुरुषोऽयमितिमिथ्याप्रत्ययंक
रोति तद्वदनाद्यविद्याकृतभ्रांत्याब्रह्मणि कर्तृत्वभोक्तृत्वादिलक्षणा जीवता कृता ॥ जीवस्यता ॥१३॥
त्विकंरूपंसाक्षादपरोक्षंब्रह्म तस्मिन्दृष्टेतत्त्वमस्यादिमहावाक्येनसाक्षात्कृतेसतिनिवर्तते स्थाणौदृ
ष्टेकल्पितपुरुषइवजीवताऽपिविनश्यतीत्यर्थः ॥ ४५ ॥

ननु विदुषामप्यहंममेत्यादिप्रत्ययेजाग्रतिकथंसानिवर्तते इत्याशंक्याहंममेत्याद्यज्ञानकार्यमपि तत्त्वज्ञानंबाधतइति सदृष्टांतमाह ॥ तत्त्वेति ॥ जीवस्ययत्तत्त्वस्वरूपंसच्चिदानंदात्मकंलक्ष्यं तस्यानुभवादुत्पन्नंयत्तत्त्वमस्यादिमहावाक्याद्ब्रह्मात्मैक्यज्ञानं तदंजसाझटित्येवाहंममेतिचाज्ञानमज्ञानकार्यंबाधते ॥ भानुदर्शनं यथादिग्भ्रमादि ॥ आदिनास्थाण्वादौपुरुषादिभ्रांतिंचबाधते तद्वदित्यर्थः ॥ विदुषामहंममेत्यादिप्रत्ययस्तुबाधितानुवृत्त्येतिभावः ॥ ४६ ॥ इदानींनिवृत्ताज्ञानतत्का

तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमंजसा ॥ अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४६॥ सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलं स्थितं ॥ एकं च सर्वमात्मानं ईक्षते ज्ञानचक्षुषा ॥ ४७ ॥ आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न विद्यते ॥

र्यस्यविदुषोदृष्टिमनुवदति ॥ सम्यगितिद्वाभ्यां ॥ असंदिग्धाविपर्यस्तंज्ञानंविद्यतेयस्य सयोगी तेनैवज्ञानचक्षुषा परिपूर्णाधिष्ठानस्वरूपेस्वात्मन्येवाखिलंदृश्यंकल्पिततयास्थितमीक्षतेपश्यति कल्पितस्याधिष्ठानसत्तातिरिक्तसत्ताकत्वाभावात् सर्वंदृश्यमेकमद्वितीयमधिष्ठानभूतमात्मानमीक्षते तेनैवज्ञानचक्षुषापश्यतीत्यर्थः ॥ ४७ ॥ ननु प्रत्यक्षतयाऽऽत्मभिन्नत्वेनप्रतीयमानंजगत् कथमात्मन्यभेदेन पश्यतीत्याशंक्योपादेयस्योपादानानतिरिक्तत्वाद्बाधसामानाधिकरण्येनतस्याभेददर्शनमितिसदृष्टांतमाह ॥ आत्मैवेति ॥ इदंसर्वंजगदात्मैवात्मोपादेयत्वात् ॥ अतएवात्मनो

ऽन्यत्पृथक्सत्ताकं नकिंचिद्विद्यते ॥ यथाघटशरावादि मृदुपादानकं मृदःस्वकारणाद्भिन्नंन तद्व 
द्विद्वान्सर्वंदृश्यजातमात्मानमात्मस्वरूपमीक्षते ॥ प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधादिति तदन
न्यत्वमारंभणशब्दादिभ्यइतिचन्यायात् वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुतेश्च
 ॥ ४८ ॥ एवंविदुषोवास्तवदृष्टिमुक्त्वाऽथतस्यजीवन्मुक्त्यवस्थांदर्शयति ॥ जीवन्मुक्तइतिचतु
र्भिः ॥ तदात्मतत्त्वंविद्वान्जीवन्मुक्तस्तु पूर्वंतत्त्वज्ञानात्प्रागनाद्यविद्याकल्पिता ये देहेंद्रियमनो
बुद्ध्यादीनामुपाधीनांगुणाधर्मास्तांस्त्यजेत्विवेकेनदूरीकरोति ॥ सच्चिदानंदरूपत्वाद्भ्रमरकीट

मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४८ ॥ जीवन्मुक्त-
स्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ॥ सच्चिदानंदरूपत्वाद्भ-
वेद्भ्रमरकीटवत् ॥४९॥ तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिरा-
क्षसान् ॥ योगी शांतिसमायुक्त आत्मारामो विराजते ॥ ५० ॥

वत्साक्षाद्ब्रह्मैवभवेत्भवति ॥ अत्रायमाशयः ॥ यथाकश्चित्कीटविशेषो भ्रमरकीटविशेषस्यभय
तस्तदाकारांचित्तवृत्तिंकुर्वन् पूर्वशरीरधर्मान्परित्यज्यसएवभवति तथाविद्वांस्तु अत्रैवसन्ब्र 
ह्माप्येतीतिश्रुत्या पूर्वमपिसच्चिदानंदरूपंब्रह्मैवातःकथंसआत्मनिब्रह्मतांध्यायन् पूर्वोपाधिगुणां
स्त्यक्त्वा ब्रह्मनभवेदिति ॥ ४९ ॥ अतएव जीवन्मुक्तस्यश्रीरामचंद्ररूपत्वंरूपकेणवर्णयति ॥
तीर्त्वेति ॥ आत्मन्यारामःस्थितिर्यस्यसयोगी मोहार्णवमज्ञानसमुद्रं ब्रह्मात्मैक्यज्ञानसेतुनातीर्त्वा

रागद्वेषादिलक्षणान् रावणादिराक्षसान् शांतिसीताऽपहर्तॄन् शुद्धांतःकरणरूपाद्धनुषोनिःसृतैर्वै राग्यविचारादिबाणैर्हत्वाविदार्य शांतिलक्षणा या सीतातयायुक्तःसन् प्रारब्धशेषेणस्थितायांश रीरलक्षणायोध्यायां स्वस्वरूपस्थितिलक्षणेस्वराज्येऽभिषिक्तःसन्विशेषेणराजतेप्रकाशतेइत्यर्थः ॥ ॥ ५० ॥ अधुना लक्षणविषयाजीवन्मुक्तस्यस्थितिमाह ॥ बाह्येति ॥ चक्षुरादिबाह्येंद्रियविष यसंबंधजन्यमतएवानित्यंयत्सुखंतस्मिन्नासक्तिंप्रीतिंहित्वापरित्यज्यात्मनःस्वरूपभूतेनसुखेननि र्वृतः आनंदितः अतएव स्वस्थः स्वरूपभूतेस्वमहिम्निस्थितः सन्नंतःस्वांतःकरणमध्येएवप्रकाश

बाह्यानित्यसुखासक्तिं हित्वाऽऽत्मसुखनिर्वृतः ॥ घटस्थदीप-
वत्स्वस्थः अंतरेव प्रकाशते ॥ ५१ ॥ उपाधिस्थोऽपि तद्धर्मैर्न
लिप्तो व्योमवन्मुनिः ॥ सर्वत्र मूकवत्तिष्ठेन्नासक्तो वायुवच्चरेत् ॥५२॥

ते चाक्षुषादिवृत्तिद्वाराबाह्यविषयेषुविस्तृतस्यज्ञानलक्षणतेजसस्तन्निरोधेनमध्येएवनिरुद्धत्वात् ॥ अत्रदृष्टांतमाह ॥ घटस्थदीपवदिति ॥ यथाघटेवर्त्तमानो योदीपःस बाह्यनिवृत्तकिरणःसन्नंतरेव विशेषतयाप्रकाशते तद्वदित्यर्थः ॥ तदुक्तंभगवता ॥ प्रजहातियदाकामान्सर्वान्पार्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टःस्थितप्रज्ञस्तदोच्यतइति ॥ ५१ ॥ किंच उपाधिस्थइति ॥ देहाद्युपाधौ साक्षित्वेनस्थितोऽपि मुनिर्मननशीलस्तत्त्वविद् व्योमवत्यथाकाशोधूल्यादिनानलिप्यते तद्व दुपाधिधर्मैर्नलिप्तोभवति ॥ सर्वत्रपृथिव्यामटन्सर्वज्ञोऽपि सन्लोकेषणारहितत्वात् मूकवत्तिष्ठे

 त्तिष्ठति ॥ नासक्तःप्रारब्धोपनतेषुविषयेष्वासक्तिरहितःसन्वायुवत् यथावायुःसुगंधितस्थलेआ 
 सक्तिरहितोगच्छति तद्वच्चरेच्चरतीत्यर्थः ॥५२॥ अथतस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्ये॥
भूयश्चांतेविश्वमायानिवृत्तिरित्यादिश्रुतिप्रतिपाद्यंतस्यविदेहकैवल्यमाह ॥ उपाधीति ॥ प्रारब्ध
 भोगोपशांतौदेहेंद्रियादिरूपोपाधेर्विलयोभवति तद्विलयान्मुनिर्विद्वान्विष्णौव्यापकेपरब्रह्मणि
निर्विशेषंविशेषरहितंयथास्यात्तथाविशेत् ॥ अत्यंतप्रवेशेदृष्टांतत्रयमाह ॥ जलेजलमित्यादि ॥
यथानद्यःस्पंदमानाःसमुद्रेऽस्तंगच्छंतिनामरूपेविहाय ॥ तथाविद्वान्नामरूपाद्विमुक्तःपरात्परंपुरु

**उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ॥ जले जलं वि-**
**यद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५३ ॥ यल्लाभान्नापरो लाभो**
**यत्सुखान्नापरं सुखं ॥ यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥५४॥**

षमुपैतिदिव्यमितिश्रुतेर्यथासमुद्रजलेनदीजलंप्रविशति यथावावियत्घटाद्याकाशोघटाद्युपाधिं
विहायमहाकाशे ॥ दीपादीनांविशेषतेजोमहातेजसिच यथैतानिजलादीनिजलादिष्वत्यन्ताभे
देनप्रविशंति तथाविद्वानपिविदेहकैवल्यावस्थायांनिर्विशेषंविशतीत्यर्थः ॥५३॥ विदेहकैवल्या
वस्थायांविद्वान् यद्ब्रह्मसंपद्यते तदेवेदानींनिरूपयति ॥ यल्लाभादित्यष्टभिः ॥ यस्यब्रह्मणोला 
भात्प्राप्तेरपरोद्वितीयोलाभोनास्ति तस्यपरमपुरुषार्थत्वेनसर्वलाभानांतत्रैवांतर्भावात् ॥ यस्यब्र
ह्मणःस्वरूपभूतसुखादपरंसुखंनविद्यतेतस्यनिरतिशयसुखत्वेनक्षुद्रानंदानांतत्रैवांतर्भावात् ॥ एत

स्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवन्तीतिश्रुतेः यस्यब्रह्मणःसाक्षात्कारलक्षणात् ज्ञानादप रंज्ञानंनास्ति ॥ ब्रह्मवेदब्रह्मैवभवतीतिश्रुत्यापरमपुरुषार्थहेतुत्वेनातिश्रेष्ठत्वात् ॥ तत्तादृशंब्रह्मयेन रूपेणविदेहकैवल्यावस्थायांविद्वांस्तिष्ठतीत्यवधारयेत् निश्चित्यजानीयादित्यर्थः ॥५४॥ यद्दृष्ट्वेति यद्ब्रह्मदृष्ट्वासाक्षात्कृत्यापरंदृश्यंद्रष्टव्यंनास्ति अधिष्ठानभूतस्यतस्यसाक्षात्कृतत्वेकल्पितस्यसर्वस्य साक्षात्कृतत्वात् ॥ येनाविज्ञातंविज्ञातमितिश्रुतेः ॥ यद्ब्रह्मभूत्वायदैक्यंगत्वापुनर्भवोरूपांतरेणज न्मनभवति ॥ यद्गत्वाननिवर्तंतेतद्धामपरमंममेतिभगवदुक्तेः ॥ यद्ब्रह्मसामान्यतःसर्वोपादान

यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा नपुनर्भवः ॥ यज्ज्ञात्वा नापरं ज्ञेयं
तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥ तिर्यगूर्ध्वमधः पूर्णं सच्चिदानंदम-
द्वयम् ॥ अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥

त्वेनज्ञात्वाऽपरंज्ञेयंज्ञातव्यंनास्ति कार्यस्यकारणातिरिक्तसत्ताशून्यत्वेनतस्मिन्ज्ञातेतस्यज्ञातत्वा त् ॥ यथैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रु तेः तद्ब्रह्मेत्यवधारयेदित्युक्तार्थःपादः ॥ ५५ ॥ ननु विदेहकैवल्यावस्थायांतत्त्वविदोयद्ब्रह्मभवं ति तत्किंपरिच्छिन्नं तथासत्यनित्यत्वेनापुरुषार्थत्वात्किंतद्भावापत्त्येत्याशंक्य तस्यपरिपूर्णनित्या नंदरूपत्वेनपरमपुरुषार्थत्वान्मैवमित्याह ॥ तिर्यगिति ॥ यत्सच्चिदानंदमद्वयंवस्तुतिर्यक् वाम दक्षिणतः ऊर्ध्वमधश्चपूर्णंतद्ब्रह्मेत्यनेनसंबंधः ॥ तदुक्तंवेदे ब्रह्मैवेदममृतंपुरस्ताद्ब्रह्मपश्चाद्दक्षिणत

 

श्चोत्तरेणअधश्चोर्ध्वंचप्रसृतंब्रह्मैवेदंविश्वंवरिष्ठंपूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतेइति ॥ नचतत्रदेशपरिच्छेदाभावेऽपिवस्तुपरिच्छेदःस्यादितिचेत्तत्राह ॥ अनंतमिति ॥ तत्रकल्पितानांवस्तूनांतदतिरिक्तसत्ताशून्यत्वेनतत्कृतपरिच्छेदाभाववदित्यर्थः ॥



नन्वेवमपिकालपरिच्छेदःस्यादितितत्राह ॥ नित्यमितिकालपरिच्छेदशून्यमित्यर्थः ॥ नित्योनित्यानांचेतनश्चेतनानां यस्यब्रह्मचक्षत्रंचोभेभवतओदनःमृत्युर्यस्योपसेचनंकइहावेदयत्रसइत्यादिश्रुतेः ॥ तर्हिसजातीयभेदवत्स्यादिति तत्राह ॥ एकमिति ॥ सजातीयभेदशून्यमित्यर्थः ॥

अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यतेऽद्वयम् ॥ अखंडानंदमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५७ ॥

एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेता केवलो निर्गुणश्च ॥ एकएवहिभूतात्माभूतेभूतेव्यवस्थितः॥एकधावहुधाचैवदृश्यतेजलचंद्रवत् ॥ एकमेवाद्वितीयंब्रह्मनेहनानास्तिकिंचनेत्यादिश्रुतेर्देशकालवस्तुपरिच्छेदशून्यंयत्तद्ब्रह्मेत्यवधारयेदित्यर्थः ॥ अतदिति ॥ अखंडानंदमेकमद्वयंयद्वस्तु अथातआदेशोनेतिनेतीति नेहनानास्तिकिंचन अतएवस्थूलमह्रस्वमदीर्घमित्यादिवेदांतैरतद्व्यावृत्तिरूपेणपरमार्थवस्त्वतिरिक्तसर्वनिरसनेन लक्ष्यतेनिषेधावधित्वेनबोध्यते तद्ब्रह्मेत्यवधारयेत् ॥ ५७ ॥

ननु ब्रह्मेंद्रादयोऽपिनिरतिशयानंदिनः श्रूयंते तत्कथंविदेहकैवल्यावस्थायांयद्ब्रह्मप्राप्यतेतस्यैवा नंदरूपत्वमित्याशंक्य तेषामपिब्रह्मानंदलवेनैवलवानंदित्वमित्याह ॥ अखंडेति ॥ अपरि च्छिन्नानंदोरूपंयस्यतस्यानंदसमुद्रस्यपरमात्मनआनंदलवंसुखलेशंआश्रिताब्रह्मेंद्रादयस्तारतम्ये न न्यूनाधिक्येन लवाः लेशपरिमाणाआनंदिनोभवंति ॥ एतस्यैवानंदस्यान्यानिभूतानिमा त्रामुपजीवंतीतिश्रुतेः ॥ अतोयस्यब्रह्मानंदस्यलेशमात्रेणब्रह्मेन्द्रादीनामानंदित्वं तत्रैवविदुषोविदे

अखंडानंदरूपस्य तस्यानंदलवाश्रिताः ॥ ब्रह्माद्यास्तारतम्येन
भवंत्यानंदिनो लवाः ॥ ५८ ॥ तद्युक्तमखिलं वस्तु व्यवहार-
स्तदन्वितः ॥ तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥५९॥
अनणवस्थूलमह्रस्वमदीर्घमजमव्ययम् ॥

हकैवल्यावस्थायांस्थितिरितिभावः ॥ ५८ ॥ नन्वसौब्रह्मानंदःक्कुत्रतिष्ठति यस्यानंदलेशेनब्रह्मा दीनामानंदित्वमितिचेत्तस्यसर्वत्रैवानुगतत्वमिति सदृष्टांतमाह ॥ तद्युक्तमिति ॥ तेनसच्चिदा नंदरूपेणाखिलंघटपटादिवस्तुयुक्तमस्तिभातिप्रियरूपेणव्यवह्रीयमाणत्वात् ॥ व्यवहारश्चवच नादानादिव्यवहृतिरपितेनसच्चिदानंदरूपेणान्वितोव्याप्तएवभवति ॥ यस्मादेवंतस्मात्सच्चिदा नंदलक्षणंब्रह्मसर्वगतमस्ति यथासर्पिर्घृतमखिलेक्षीरेदुग्धेव्याप्यवर्ततेतद्वदित्यर्थः ॥ ५९ ॥ एवं परमात्मनःप्रपंचानुगतत्वेऽपितद्धर्मासंस्पर्शित्वमेवतस्यजानीयादित्याह ॥ अनण्विति ॥ अणु

परिमाणरहितंनचैषोऽणुरात्माचेतसावेदितव्यइतिश्रुत्या तस्याणुपरिमाणत्वेनप्रतिपादनात्कथंतद्र
हितइतिवाच्यं तस्यास्तद्दुर्विज्ञेयत्वेएवतात्पर्यात् ॥ अणुपरिमाणंनास्तिचेत्तर्हिमहतोमहीयानि
तिश्रुत्या महत्परिमाणंसेत्स्यतीतिचेत्तत्राह ॥ अस्थूलमिति ॥ महत्परिमाणशून्यंतस्यमहत्परि
माणत्वेघटादिवदनित्यत्वंस्यात् तथाच कृतनाशाकृताभ्यागमप्रसंगात् ॥ श्रुतेस्तुसर्वाधिष्ठानत्वे
नसर्वश्रेष्ठत्वेतात्पर्यान्नपरिमाणसाधकत्वं ॥ अह्रस्वंह्रस्वपरिमाणरहितं अदीर्घंदीर्घपरिमाणशू

अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥ यद्भासा भा-
स्यतेऽर्कादिर्भास्यैर्यत्तु न भास्यते ॥ येन सर्वमिदं भाति तद्ब्र-
ह्मेत्यवधारयेत् ॥ ६१ ॥ स्वयमंतर्बहिर्व्याप्य भासयन्नखिलं
जगत् ॥ परः प्रकाशते वह्निः प्रतप्तायसपिंडवत् ॥ ६२ ॥

न्यं ॥ एवंश्रुत्याप्रतिपादितंयदजमव्ययं जन्मविनाशरहितं अरूपगुणवर्णाख्यं नास्तिरूपं गुणा
सत्वादयः वर्णाब्राह्मणादयः आख्यंनामचयस्यतन्मुक्तोपसृप्यंसर्वगतंब्रह्मेत्यवधारयेत् ॥ ६० ॥
यद्भासेति ॥ यस्यब्रह्मणोभासाऽलौकिकतेजसाऽर्कादिःसूर्यादिर्भास्यतेप्रकाशितोभवति भास्यै
रर्कादिभिस्तुयद्ब्रह्मतत्त्वंनावभास्यते॥नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः॥
तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीतिश्रुतेः येनसर्वमिदंभूतभौतिकंजगद्भाति त
न्मुक्तोपसृप्यंब्रह्मेतिविजानीयादित्यर्थः ॥ ६१ ॥ तदेवंविदेहकैवल्यावस्थायांयद्रूपेणविदुषः स्थि
॥१७॥

तिस्तद्ब्रह्मनिरूपितमथपरमपुरुषार्थहेतुत्वेनपुनस्तत्त्वविदोनिश्चयंदर्शयति ॥ स्वयमितित्रिभिः ॥ परःपरमात्माऽखिलंजगदंतर्बहिर्व्याप्यभासयत्स्वयंप्रकाशते अत्रदृष्टांतमाह ॥ वह्निःप्रतप्तायसपिंडवदिति ॥ यथाप्रतप्तआयसस्यलोहस्यपिंडस्तमंतर्बहिर्व्याप्यवह्निर्भासयन्स्वयंप्रकाशते तद्वत्परमात्माऽपीत्यर्थः ॥ ६२ ॥ जगदिति ॥ असज्जडदुःखरूपतयाकल्पितंयज्जगत्तस्माद्विलक्षणंसच्चिदानंदवस्तुरूपंब्रह्म तस्माद्ब्रह्मणोऽन्यत्किंचननास्तिब्रह्मणोऽन्यच्चेद्यदिभाति भातुनाम परंतुमि

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ॥ ब्रह्मान्यद्भाति चे-
न्मिथ्या यथा मरुमरीचिका ॥६३॥ दृश्यते श्रूयते यत्तद्ब्रह्म-
णोऽन्यन्न किंचन ॥ तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानंदमद्वयम्
॥ ६४ ॥ सर्वगंसच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते ॥ अज्ञानचक्षु-
र्नेक्षेत भास्वंतंभानुमन्धवत् ॥ ६५ ॥

थ्या ॥ मरुमरीचिका यथामरीचिजलंविज्ञस्यमिथ्यैवभासते तद्वदित्यर्थः ॥ ६३ ॥ एतदेवस्फुटयति ॥ दृश्यतइति ॥ चक्षुषायद्दृश्यते श्रोत्रेणयच्छ्रूयते मनसायत्स्मर्यते वाचायदभिधीयते तत्त्वज्ञानात्तत्सर्वंसच्चिदानंदमद्वयंब्रह्मैव ब्रह्मणोऽन्यन्नकिंचिदस्तीतिभावः ॥ ६४ ॥ ननु सच्चिदानंदात्मकंब्रह्मसर्वगतंचेत्तदा तत्सर्वेकुतोनपश्यंतीत्याशंक्य तत्सर्वगतमपितत्त्वज्ञानदृष्टिरेवनिरीक्षतेनत्वज्ञानतिमिरांधदृष्टिरितिसदृष्टांतमाह ॥ सर्वगमिति ॥ सच्चिदात्मासर्वगतोऽपितमात्मानं

 



ज्ञानचक्षुर्यस्य स निरीक्षते॥ नचक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्यादिश्रुतेः॥ अज्ञानेनानाद्यविद्ययाऽऽवृत्तं चक्षुर्दृष्टिर्यस्य स स्वप्रकाशमप्यात्मानं नेक्षेत भास्वंतं प्रकाशमानमपि भानुं सूर्यमंधो यथा न पश्यति तद्वदित्यर्थः॥ तदुक्तं भगवता अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतव इति॥ ६५॥ ननु ज्ञानचक्षुषा पुरुषेण विवेकबलाद्देहेंद्रियादिष्वध्यासलक्षणमलापकरणे कृतेऽपि पूर्वाभ्यस्तभववासनावशात्कदाचित्पुनरप्यहंममाभिमानलक्षणमलस्फुरणात्कथमात्मनः

श्रवणादिभिरुद्दीप्तज्ञानाग्निपरितापितः॥ जीवः सर्वमला-
न्मुक्तः स्वर्णवत् द्योतते स्वयम्॥६६॥ हृदाकाशोदितो ह्यात्मा
बोधभानुस्तमोपहृत्॥ सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ६७

स्वस्वरूपावस्थितिलक्षणा शुद्धिः स्यादिति चेत्तत्राह॥ श्रवणादिभिरिति॥ श्रवणमनननिदिध्यासनैरुद्दीप्त उत्कृष्टं प्रकाशितो यो ज्ञानाग्निस्तेन परितापितो जीवः सर्वमलात्संसारमूलभूताज्ञानतत्कार्यलक्षणाद्विमुक्तो रहितः सन्स्वर्णवत्स्वयं द्योतते स्वस्वरूपेण सच्चिदानंदलक्षणेन प्रकाशते॥ यथा पुनरहंममादीनां स्फुरणं न भवेदित्यर्थः॥ ६६॥ नन्वेवं शोधित आत्मा किंभूतः कुत्र चोदितः सन् ॥१८॥
कंच प्रकाशत इति चेत्तत्राह॥ हृदाकाशेति॥ एवं शोधितो जीव आत्मा परमात्मा एकलक्षणलक्षितत्वात्स एव बोधभानुर्ज्ञानसूर्यो हृदाकाशे उदित आविर्भूतः सन्सर्वं भाति प्रकाशयति स्वयं च प्रका

शते ॥ तर्हिहृदाकाशोदितत्वेतस्यपरिच्छिन्नत्वंस्यादितिचेत्तत्राह ॥ सर्वव्यापीति ॥ सर्वस्मिन् व्याप्नोतितच्छीलइत्यर्थः ॥ यतःसर्वधारीसर्वस्याज्ञानतत्कार्यस्याधिष्ठानभूतइत्यर्थः ॥ ६७ ॥ अथसर्वेषांस्वात्मतत्वंतीर्थरूपेणवर्णयन्सेवनतःफलतश्चसर्वतीर्थशिरोमणित्वेनतस्यावश्यसेवनीयत्वंदर्शयति ॥ यद्वा ननु स्वाभाविकदुरितपरिहारार्थंतत्त्वविदोऽपिप्रयागादितीर्थयात्रोद्यमस्यकर्तव्यत्वात्कथंसर्वमलविनिर्मुक्तःस्वर्णवद्द्योततइत्याशंक्य स्वात्मतीर्थेस्नातस्यनकिंचित्कर्तव्यमित्याह ॥ दिग्देशेति ॥ योविनिष्क्रियःपरमहंसःस्वात्मतीर्थंभजतेचित्तैकाग्र्येणसेवतेससर्ववित्स

दिग्देशकालाद्यनपेक्षसर्वगं शीतादिहृन्नित्यसुखं निरंजनं ॥
यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो
भवेत् ॥ ६८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशं-
करभगवताकृतमात्मबोधाख्यं प्रकरणम् समाप्तम् ॥ ॥ ॥

र्वज्ञःसर्वगतश्चपरमात्मासन्नमृतोमुक्तोभवेत् ब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतेः ॥ कीदृशंस्वात्मतीर्थंदिग्देशकालाद्यनपेक्षसर्वगंदिक्चदेशश्चकालश्चतान्नापेक्षते यतःसर्वगंइतरत्प्रयागादितीर्थंतुदिगादिसापेक्षत्वात्परिच्छिन्नं पुनःकीदृशंशीतादिहृत्शीतोष्णादिद्वंद्वदुःखानिहरतीतितथा यतोनित्यसुखंसर्वदासुखरूपंप्रयागादितीर्थंतुद्वंद्वदुःखप्रदं पुनःकीदृशंनिरंजनंमायातत्कार्यमलशून्यंइतरत्तुसमलमपिभवत्यतःस्वात्मतीर्थंमुमुक्षुणाऽवश्यंसेवनीयमित्यर्थः ॥ तदुक्तंमहाभारते आत्मानदी

संयमतोयपूर्णा सत्यावहा शीलतटा दयोर्मिः ॥ तत्राभिषेकंकुरुपांडुपुत्र नवारिणाशुद्ध्यतिचां
तरात्मेति ॥ भागवतेचतत्रकृतस्नानानांमहत्वमुक्तं साधूनांदर्शनंपुण्यंतीर्थीभूताहिसाधवः॥तीर्थी
कुर्वंतितीर्थानिस्वांतस्थेनगदाभृता ॥ १ ॥ नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनं
त्युरुकालेनदर्शनादेवसाधवइति ॥ अत्रसाधवःस्वात्मतीर्थेकृतस्नानाइत्यर्थः ॥ अभियुक्तैरप्युक्तं
स्नातंतेनसमस्ततीर्थसलिलेदत्ताचसर्वावनिर्यज्ञानांचकृतंसहस्रमखिलादेवाश्चसंपूजिताः ॥ सं
साराच्चसमुद्धृताःस्वपितरस्त्रैलोक्यपूज्योऽप्यसौ यस्यब्रह्मविचारणेक्षणमपिस्थैर्यंमनःप्राप्नुयात् ॥
॥ १ ॥ कुलंपवित्रंजननीकृतार्था वसुंधरापुण्यवतीचतेन ॥ अपारसच्चित्सुखसागरेऽस्मिन्लीनं
परेब्रह्मणियस्यचेतइति ॥ ६८ ॥ ॥ ममभवेद्गुरुणांपदकंजयोरिहपरत्रगतिप्रदयोर्नतिः ॥ व
सतियत्रविमुक्तिरहर्निशंतदुपमांकथयामिकथंगिरा ॥१॥ गुरुगंगामहंवन्देप्लुतोयज्ज्ञानधारया॥
तापत्रयमयाकृत्यशान्तिशैत्यमुपाश्रये ॥२॥ आत्मबोधस्यटीकेयमात्मबोधविशुद्धये॥ ब्रह्मानंदे
नकृतांतां वीक्ष्यतुष्यन्तुसज्जनाः ॥ ३ ॥ श्रीनानकनिराकारं शंकरेशंकराकृतिं ॥ श्रीमन्मौक्ति
करामंचनमामिसज्जनांस्तथा ॥ ४ ॥ वेणीमाधवदेवस्यप्रसादाच्छ्रीप्रयागके ॥ दीपिकेयंमया
कारितुष्यतांमाधवोऽनया ॥ ५ ॥ ॥ इतिश्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानंदविर
चिताऽऽत्मबोधस्यदीपिकाख्याटीकासमाप्ता ॥ ॥





## ॥ अथात्मपंचकप्रारंभ

श्रीगणेशायनमः ॥ ॥ नाहंदेहोनेंद्रियाण्यंतरंगंनाहंकारःप्राणवर्गोनबुद्धिः ।
स्माशिवोऽहम् ॥ १ ॥ रज्ज्वज्ञानाद्भातिरज्जुर्यथाऽहिःस्वात्माज्ञानादात्मनो
जीवोनाहंदेशिकोक्त्याशिवोऽहम् ॥ २ ॥ आभातीदंविश्वमात्मन्यसत्यंसत्यज्ञान
त्यंशुद्धःपूर्णोनित्यएकःशिवोऽहम् ॥ ३ ॥ मत्तोनान्यत्किंचिदत्रास्तिविश्वंसत्य
स्यतुल्यंमय्यद्वैतेभातितस्माच्छिवोऽहम् ॥ ४ ॥ नाहंजातोनप्रवृद्धोननष्टोदेहस्य
स्यास्तिनाहंकारस्यैवह्यात्मनोमेशिवोऽहम् ॥ ५ ॥ नाहंजातोजन्ममृत्यूकुतोमेना
मोहौकुतोमेनाहंकर्तावंधमोक्षौकुतोमे ॥ ६ ॥ इतिश्रीमच्छंकराचार्यविरचितं

## ॥ अथनिर्वाणषट्कप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ मनोबुद्ध्यहंकारचित्तानिनाहंनचश्रोत्रजिह्वेनचघ्राणनेत्रे ॥ नचव्यो
पःशिवोऽहंशिवोऽहम् ॥ १ ॥ नचप्राणसंज्ञोनवैपंचवायुर्नवासप्तधातुर्नवापंचकोशः ॥ नवाक्
दरूपःशिवो० ॥ २ ॥ नमेद्वेषरागौनमेलोभमोहौमदोनैवमेनैवमात्सर्यभावः ॥ नधर्मोनचार्थो
नपुण्यंनपापंनसौख्यंनदुःखंनमंत्रोनतीर्थंनवेदानयज्ञाः ॥ अहंभोजनंनैवभोज्यंनभोक्ताचि
जातिभेदःपितानैवमेनैवमाताचजन्म ॥ नवंधुर्नमित्रंगुरुर्नैवशिष्यश्चिदानंद० ॥ ५ ॥ अ
सर्वत्रसर्वेंद्रियाणाम् ॥ नचासंगतंनैवमुक्तिर्नमेयश्चिदानंद० ॥ ६ ॥ ॥ इतिश्रीमच्छंक

---

इदं पुस्तकं ' नारायणजी एवजी तथा कानजी भीमजी ' इत्येताभ्यां मिलि
स्वामिश्रीसंगतीदासाज्ञया मुम्बापुर्यां जगदीश्वराख्ये मुद्रणालये मुद्रापितम् । स

इति सटीकात्मबोधः स

रुपांडुपुत्र नवारिणाशुद्धयतिचां
तंपुण्यंतीर्थीभूताहिसाधवः॥तीर्थी
रदेवामृच्छिलामयाः ॥ तेपुनं
त्यर्थः ॥ अभियुक्तैरप्युक्तं
देवाश्वसंपूजिताः ॥ सं
पिस्थैर्यंमनःप्राप्नुयात् ॥
त्सुखसागरेऽस्मिन्लीनं
॥२६परत्रगतिप्रदयोर्नतिः ॥ व
गामहंवन्देप्लुतोयज्ज्ञानधारया ॥
यमात्मबोधविशुद्धये ॥ ब्रह्मानंदे
शंकरेशंकराकृतिं ॥ श्रीमन्मौक्ति
ाच्छ्रीप्रयागके ॥ दीपिकेयंमया
ककरामोदासीनशिष्यब्रह्मानंदविर